थिकवैशेषिकाः । त्रैगुण्यरूपं सामान्यमिति सांख्याः । भूतचतुष्टयं प्रमाणभूमीति चार्वाकाः ॥ तथा फलेऽपि विप्रतिपद्यन्ते, अर्थाधिगतिः प्रमाणफलमिति सौगताः । पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं तु फलमिति मीमांसकादयः ।

तत्र तावल्लक्षणसंख्याविप्रतिपत्ती निराचिकीर्षुराह–

**प्रमाणं स्वपराभासि ज्ञानं, बाधविवर्जितम् ।**
**प्रत्यक्षं च परोक्षं च द्विधा, मेयविनिश्चयात् ॥ १ ॥**

तत्रापि पूर्वार्धेन लक्षणविप्रतिपत्तिमुत्तरार्धेन तु संख्याविप्रतिपत्तिं निराचष्टे । लक्षणं च पररूपेभ्यो व्यावर्तनक्षमोऽसाधारणधर्मः । लक्ष्यते परिच्छिद्यते विजातीयेभ्यो व्यावृत्तं लक्ष्यं येन तल्लक्षणमित्युच्यते । तच्चेह द्वये प्रत्याख्याः स्वदर्शनानुरक्तान्तःकरणास्तीर्थान्तरीया विप्रतिपन्नाः, तथा मुग्धबुद्धयो लौकिका अव्युत्पन्नाश्चेति । ततश्च यदादौ विप्रतिपन्नान् प्रति लक्षणं तदेवं लक्ष्यलक्षणभावो द्रष्टव्यः । यदिदं भवतामस्माकं च प्रमाणमिति प्रसिद्धम्, तत्स्वपराभासि ज्ञानं बाधविवर्जितं मन्तव्यम्; प्रसिद्धं प्रमाणमनूद्याप्रसिद्धं स्वपराभासित्वादि विधीयते । यदा तु अव्युत्पन्नमतीन् प्रतीदं लक्षणम्, तदा प्रतिप्राणि स्वपरप्रकाशिनो ज्ञानस्य बाधारहितस्य कस्यचित् सिद्धत्वात्, अन्यथा प्रतिनियतव्यवहारोच्छेदप्रसङ्गात्, एवं ते बोध्यन्ते– यदेतो भवतां क्वचिन्नियतार्थग्राहि स्वपरप्रकाशकं बाधरहितं ज्ञानं प्रसिद्धं तत् प्रमाणमिति बुध्यन्ताम् । अत्रापि सिद्धस्यानुवादोऽसिद्धस्य विधानं योज्यम् ॥

अधुनाक्षरार्थः—तत्र प्रमाणमिति पूर्ववत् । स्व आत्मा स्वरूपं, परोऽर्थः, तावाभासयितुं प्रकाशयितुं शीलमस्य तत्तथा । ज्ञायते निर्णीयते तत्त्वं येन तद् ज्ञानम् । बाध्यतेऽनेनेति बाधः, विपरीतार्थोपस्थापकप्रमाणप्रवृत्तिरिति यावत् । तेन विशेषेण वर्जितं रहितं यज्ज्ञानं तत्प्रमाणमिति संटङ्कः ॥

इह च व्यवच्छेद्यापेक्षया लक्षणे विशेषणप्रवृत्तेः स्वपराभासि इत्यनेन ये स्वाभास्येव ज्ञानं मन्यन्ते ज्ञानवादिनो बौद्धविशेषाः, ये च पराभास्येव मीमांसक-

---

अर्थापत्त्या प्रभाकृद् वदति, स निखिलं मन्यते भट्ट एतत्,
साभाव, द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥

**त्रैगुण्यरूपं सामान्यमिति** । त्रयो गुणाः सत्त्वरजस्तमांसि, ततः स्वार्थे "ष्योऽनन्तादेः" इति ष्यः, त्रयो लोकास्त्रैलोक्यं षड् गुणाः षाड्गुण्यम्, ततस्त्रैगुण्यं रूपं स्वभावो यस्य सामान्यस्य तत् त्रैगुण्यरूपम् । **भूतचतुष्टयमिति** । पृथ्व्यप्तेजोवायुलक्षणम् । केचिदेव तु चार्वाकैकदेशीया आकाशलक्षणं पञ्चमं भूतमभिमन्यमानाः पञ्चभूतात्मकं जगदाचक्षते इति ॥

**तीर्थान्तरीयेत्यादि** । तीर्यते भवाब्धिरनेनेति तीर्थं द्वादशाङ्गं तदाधारो वा संघः, तस्मादन्यत्तीर्थान्तरं तत्र भवास्तीर्थान्तरीयाः । **लौकिका इति** । लोके भवा अध्यात्मादेराकृतिगणत्वात् "अध्यात्मादेः" इति शैषिकष्ठञ् ।

नैयायिकादयस्ते निरस्ताः। ते हि बहिरर्थाभावात् ज्ञानं स्वांशपर्यवसितसत्ताक-मित्याचक्षीरन्, तदयुक्तम्, ज्ञेयार्थाभावे ज्ञानाभावप्रसङ्गात्। अथार्थाभावेऽपि स्वप्नदशायां वनदेवकुलादिनानाप्रतिभासं ज्ञानमवलोकितमिति तथाभूतं सकलं ब्रूषे, तन्न, तस्यापि जाग्रदवस्थाभाविसद्भूतार्थदर्शनसंपादितात्मसंस्कारमिद्धादिकारण-कलापसंनिधानप्रबोधव्यपेक्षत्वात्, इतरथात्यन्ताननुभूतभूतपञ्चकातिरिक्तषष्ठभूतप्रति-भासः स्यात्। किं च। कथमेकं ज्ञानं सितपीताद्यनेकाकारविवर्तमिति प्रष्टव्यो भवान्। अनाद्यविद्यावासनात इति चेत्, अत्रापि विकल्पयुगलमुमलमवतरति, ततो ज्ञानात् सा वासना व्यतिरिक्ता स्याद् न वा। व्यतिरेकश्चेद्, एवं सति तद्ग्राहक-प्रमाणमभिधानीयम्, ज्ञानव्यतिरिक्तायाः संवेदनाभावात्, तत्संवेदने चार्थस्यापि व्यतिरिक्तस्य संवेदनमिति स दुष्प्रतिषेधः स्यात्। वेद्यवेदकाकारकलुषिताज्ज्ञाना-देव व्यतिरिक्ता तत्कारणभूता ज्ञानरूपैव सानुमीयते इति चेत्, तया सह संबन्ध-ग्रहणाभावात्, दृष्टहान्यदृष्टपरिकल्पनाप्रसङ्गाच्च। किं च। यथा व्यतिरिक्तवासना-

---

तस्यापीत्यादि। स्वप्नदशाज्ञानस्यापि जाग्रदवस्थायां भवनशीलं यत्सद्भूतार्थदर्शनं तेन संपादितो य आत्मनः संस्कारस्तस्य मिद्धादिकारणकलापसंनिधानेन यः प्रबोधस्तं व्यपेक्षते, "कर्मण्यण्" (पा० ३-२-१) तद्भावस्तस्मात्। मिद्धादीति। मिद्धशब्दो निद्राभिधायी नपुंसकः। यद्विनिश्चयटीकायां धर्मोत्तरः— मिद्धं निद्रेति। आदिशब्दा-ददृष्टं दध्यादिभोजनं सजलादिदेशो निशीथादिकालो वातादिः प्रकृतिर्वातादिदूषितत्वं चेत्यादि गृह्यते। तथा चात्रार्थे आगमः—

> अणुहूयदिट्ठचिंतियसुयपयइवियारदेवयाणूया।
> सुमिणस्स निमित्ताइं पुण्णं पावं च नाभावो ॥१॥ (विशे० भा० १७०३)
> [अनुभूतदृष्टचिन्तितश्रुतप्रकृतिविकारदेवतानूपाः।
> स्वप्नस्य निमित्तानि पुण्यं पापं च नाभावः ॥ १ ॥]

अत्र 'अणूयेति' अनूपः सजलदेशः॥ वेद्येत्यादि। एवशब्दो भिन्नक्रमे, ततोऽयमर्थः— वेद्यवेदकाकारकलुषितादेव ज्ञानाद् व्यतिरिक्ता न तु ज्ञानमात्रादपीति, अत एव आह— तत्कारणभूता वेद्यवेदकाकारकलुषज्ञानस्य हेतुभूता। ज्ञानरूपैवेति। अयमभिप्रायः— ज्ञानरूपा वासना पूर्वक्षणवर्तिनी वेद्यवेदकाकारकलुषमुत्तरक्षणवर्ति विज्ञानं जनयतीति। तयेत्यादि। तया वासनया सह वेद्यवेदकाकारकलुषज्ञानस्य कार्यकारणभावलक्षणसंबन्धग्रह-णाभावात् तदभावश्च भवदभिप्रायेण पूर्वापरक्षणवर्तिज्ञानव्यतिरिक्तस्य ग्राहकस्यात्मनो-ऽसत्त्वात्। दृष्टहानीत्यादि। घटादिसहितचक्षुरादिसामग्रीतोऽन्वयव्यतिरेकाभ्यां ज्ञानमुत्पद्यते इति दृष्टस्य प्रत्यक्षाद्यनिराकृतस्य व्यवहारस्य हानिः, तथा प्रत्यक्षादिभिः प्रमाणैरसंवेद्य-मानायाः वासनायाः सकाशात् सितपीतादिनानाकारकलितमध्यक्षमुत्पद्यते इत्यदृष्टं तस्य

**वशादेकमपि ज्ञानं नानाकारम्, तथा जडमपि तद्वशादेव बोधरूपं प्रकाशत इति विपरीतापत्तेरर्थ एव सिद्धिमास्कन्देद् न ज्ञानम्। अथाव्यतिरिक्ता, हन्त ज्ञानमेव तत्र वासना तदव्यतिरिक्तत्वात् तत्स्वरूपवदित्यास्तां तावत्। पराभास्यपि स्वप्रकाशाभावादभिदधीरन्, तदप्यसंबद्धम्। स्वप्रकाशाभावे परप्रकाशायोगात्। न हि प्रदीपः स्वरूपमनुद्योतयन् घटाद्युद्योतने व्याप्रियते। स्वयं चाप्रतीतमपि यद्यर्थं ग्राहयति ज्ञानम्, देवदत्तस्योत्पन्नं (ज्ञानं) यज्ञदत्तं ग्राहयेत्, विशेषाभावात्। अन्यच्च। परप्रकाशनमात्रेऽपि दूरासन्नादिभेदः प्रथमानानामर्थानां किमपेक्षश्चकास्ति, शरीरापेक्ष इति चेत्, न, तस्यापि प्रकाश्यताविशेषात्, तस्मादन्तर्मुखाकारस्य बहिरर्थग्रहणे सति अयं घटामाटीकते नान्यथा। अथार्थापत्त्यादिना प्रमाणान्तरेण तदन्तर्निविष्टं गृह्यते, ततस्तदपेक्षया योक्ष्यते दूरासन्नादिभेद इति चेत्, न, तत्रापि विकल्पयुगलकानतिवृत्तेः। तथा हि–तत्प्रमाणान्तरं स्वप्रकाशमन्यप्रकाशं वा। स्वप्रकाशं चेत्, प्रथमस्य किं क्षूणम्। अन्यप्रकाशं चेत्, तत्रापीयमेव वार्ता इत्यनवस्था, तस्मात् स्वरूपमवभासयदेव ज्ञानमर्थग्रहणाय व्याप्रियते इति स्थितम्॥**

परिकल्पना तयोः प्रसंगात्। **जडमपीति।** अचिद्रूपमपि ज्ञानम्। **नहीति।** यदुक्तम्—

दीपवन्नोपपद्येत बाह्यवस्तुप्रकाशनम्।
अनात्मवेदने ज्ञाने जगदान्ध्यं प्रसज्यते॥ १॥

**विशेषाभावादिति।** देवदत्तोत्पन्नज्ञानस्य देवदत्तयज्ञदत्ताभ्यामसंवेद्यमानत्वेनाविशेषात्। **प्रथमानानामिति।** प्रकाशमानानाम्। **अन्तर्मुखेत्यादि।** अन्तर्मुखोऽन्तःप्रकाशक आकारो यस्य ज्ञानस्य तस्यैव बाह्यार्थपरिच्छेदे सति अयं दूरासन्नादिभेदः संगच्छते। **अर्थापत्त्यादिनेति।** यदि ज्ञान मयि उत्पन्नं न स्यात् तर्हि अर्थप्रकटता मे न स्यात् तस्मादर्थप्राकट्यान्यथानुपपत्त्या ज्ञान शरीरान्तर्निविष्टमिति व्यवस्थाप्यते। यदुक्तम्—

नान्यथेहार्थसद्भावो दृष्टः सन्नुपपद्यते।
ज्ञान चेन्नेत्यतः पश्चात्प्रमाणमिति कल्प्यते॥ १॥ इति।

आदिशब्दान्नैयायिकमताभिप्रायेण प्रत्यक्ष गृह्यते। तथा हि – तेषां मते घटादिविषयं प्रत्यक्षं घटमेव परिच्छिनत्ति, यदा च घटप्रत्यक्षविषयं मानसाभिधानं प्रत्यक्षान्तरमुत्पद्यते तदा तेन घटादिविषयं प्रत्यक्षं मम उदपद्यतेति निश्चीयेत। तथा येषां मतेऽनुमानात्पृथगर्थापत्तिर्नेष्यते, तन्मतेऽनुमानेन ज्ञानं ममोदपादीति व्यवस्थाप्यते इति, तदप्यनुमानमत्रादिशब्दाद् गृह्यते। तच्चानुमानं द्वेधा, दृष्टं सामान्यतोदृष्टं च। तत्र प्रत्यक्षपरिच्छेद्यार्थानुमापकं दृष्टम्, यथा धूमो धूमध्वजस्य। स्वरूपविप्रकृष्टार्थं तु सामान्यतोदृष्टं, यथा गन्धादिज्ञानं घ्राणादेः। तथा हि– गन्धाद्युपलब्धिः करणकार्या, क्रियात्वात्, या क्रिया सा करणकार्या यथा छिदिक्रिया, क्रिया चेयम्, तस्मात्करणकार्या; तथात्रत्यमप्यनुमानं स्वरूपविप्रकृष्टार्थमिति सामान्यतोदृष्टम्। तथा हि– अर्थप्राकट्यं विशिष्टकारणजन्यम्, विशिष्टकार्य-

'ज्ञानम्' इत्यनेन तु यन्नैयायिकादिभिः पर्यकल्पि संनिकर्षः प्रमाणमिति, तस्य प्रामाण्यं निरस्यति। यतः स्नानपानावगाहनाद्यर्थक्रियानिर्वर्तनक्षममर्थं निश्चित्याऽव्यवधानेन प्रवर्तन्ते प्रमातारस्तदेव ज्ञानं प्रमाणं न संनिकर्षो जडतयास्ति, अव्यवहितनिर्णयाभावादित्याकूतम्। अर्थोपलब्धिहेतुत्वात्तस्य प्रामाण्यमिति चेत्, विशीर्णेदानीं प्रमाणेयत्ता, देहादेरपि तत्कारणतया प्रामाण्यापत्तेरित्यास्तां तावत्।

'बाधविवर्जितम्' इत्यमुना तु यत्तिमिरादितिरस्कृतनयनदीधितिप्रसरादिना नभस्तलावलम्बिनिशीथिनीनाथद्वयादिप्रतिभासम्, यच्च कुतर्कभ्रान्तचेतसां निजदर्शनाकर्णनप्रभवं क्षणक्षयिसामान्यविशेषैकान्तेश्वरादिकृतभुवनप्रतिभासं ज्ञानं तत्प्रत्यनीकार्थप्रत्यायकप्रमाणान्तरोपनिपातप्लावितत्वात् प्रतिक्षिपति। विशेषार्थविशब्दोपादानात्तु यः खलु बहुलकामलावलेपलुप्तलोचनबलानां धवले जलजे पीतिमानमादधानो बोधः समुल्लसति, स यद्यपि सकलं कालं तद्दोषाप्युपरमे प्रमातुर्निजदर्शनेन न बाध्यते, तथापि तज्जलजधवलताग्राहिणा जनान्तरदर्शनेन बाधितत्वान्न प्रमाणमित्युक्तं भवति।

समस्तलक्षणेन तु यत्परे प्रत्यपीपदन् अनधिगतार्थाधिगन्तृ प्रमाणम् अविसंवादकं प्रमाणम्, अर्थोपलब्धिहेतुः प्रमाणम् इत्यादि तन्निरास्थत्, तथा हि-अनधिगतार्थाधिगन्तृत्वं किमभिधीयते? ज्ञानान्तरेणानधिगतमर्थं यदधिगच्छति तत्प्रमाणमिति चेत्, तर्हि तज्ज्ञानान्तरं परकीयं स्वकीयं वा। तद्यदि परकीयम्, तदयुक्तम्, सर्वज्ञज्ञानस्य सकलार्थगोचरतया सर्वप्राकृतलोकज्ञानानामधिगतार्थाधिगन्तृत्वेनाप्रामाण्यप्रसङ्गात्, तदर्थग्राहिजनान्तरदर्शनसंभवाच्च। अथ स्वकीयं, तत्रापि सोऽधिगम्योऽर्थः किं द्रव्यमुत पर्यायो वा? द्रव्यविशिष्टपर्यायः, पर्यायविशिष्टं वा द्रव्यमिति? तथा किं सामान्यमुत विशेषः? आहोस्वित् सामान्यविशिष्टो विशेषः विशेषविशिष्टं वा सामान्यम्? इत्यष्टौ पक्षाः। तत्र यद्याद्यमुररीकुरुषे, तदयुक्तम्, द्रव्यस्य नित्यत्वैकत्वाभ्यामनधिगतत्वांशाभावात्। अथ द्वितीयम्, तदप्यचारु, पर्यायस्य प्राचीनसंवेदनोदयसमयध्वस्तस्य संवेदनान्तरप्रभवकालं यावत्प्रतीक्षणासंभवेन विशेषणानर्थक्यात्। उत तृतीयम्, तदप्यसाधीयः, विकल्पद्वया-

---

त्वात्, यद् यद् विशिष्टकार्यं तद् तद् विशिष्टकारणजन्यं यथा चित्रादि, विशिष्टकार्यं चेदम्, तस्माद्विशिष्टकारणजन्यम्। ततश्च यद्यपि परप्रकाश्येव ज्ञानं तथापि अर्थापत्त्यादिना प्रमाणेन ज्ञानं मे समुत्पन्नमिति निश्चीयते।

यत इति। ज्ञानात्। आकूतम् अभिप्रायः।

क्षणक्षयीत्यादि। क्षणेन क्षयः स यस्य वस्तुनोऽस्ति तच्च सामान्यविशेषयोरेकान्तश्च ईश्वर आदिर्यस्य प्रकृत्यात्मस्वभावादेस्तेन कृतं भुवनं च तेषां प्रतिभासो यत्र ज्ञाने तत्तथा। प्लावितत्वादिति। बाधितत्वात्। जलजे शङ्खे। अथ द्वितीयमिति। उररीकुरुषे इति

वृत्तिक्रमात्। स हि द्रव्यविशिष्टः पर्यायः समकालभाविना ज्ञानेनानधिगतोऽधिगम्यते, यद्वा कालान्तरभाविनेति। न तावत्समकालभाविना, तत्संभवाभावेन विशेषणवैफल्यात्। न हि संभवोऽस्त्येकस्य प्रमातुरेककालं द्रव्यक्रोडीकृतैकपर्यायविषयसंवेदनद्वयप्रवृत्तेः, तथानुभवाभावात्, परस्परमधिगतार्थाधिगन्तृत्वेनाप्रामाण्यप्रसङ्गाच्च। नापि कालान्तरभाविना, गृह्यमाणपर्यायस्य कालान्तरानाक्रन्दनात्, पूर्वोत्तरक्षणत्रुटितवर्तमानक्षणमात्रसंबन्धत्वात्तस्य। एतेन पर्यायविशिष्टद्रव्यपक्षोऽपि प्रतिव्यूढः, समानयोगक्षेमत्वात्। अथ सामान्यं, तदप्यसंबद्धम्, तदेकतया प्रथमज्ञानेन साकल्यग्रहणादुत्तरेषां सामान्यज्ञानानामधिगतार्थगोचरतयाप्रामाण्यप्रसङ्गात्। अथ विशेषः, स नित्योऽनित्यो वेति वक्तव्यम्। नित्यश्चेत्, एवं सत्याद्यसंवेदनेनैव तस्य सामस्त्यग्रहणादुत्तरेषां तद्विषयाणामधिगतगोचरत्वेनाप्रामाण्यप्रसक्तिः। अनित्यश्चेत्, पर्यायदूषणेन प्रतिक्षिप्तः। अथ सामान्यविशिष्टो विशेषः, कास्य विशिष्टता, किं तादात्म्यमुत तत्संनिधिमात्रम्? तादात्म्यं चेत्, प्रथमज्ञानेन सामान्यवत्तस्यापि ग्रहणात्, अन्यथा तादात्म्यक्षतेः, तद्विषयान्यज्ञानानामप्रामाण्यं प्रसज्येत। तत्सांनिध्यपक्षेऽपि द्वयोरपि परस्परं विशकलितरूपत्वात् पक्षद्वयोदितं दूषणं पश्चाल्लग्नं धावति। विशेषविशिष्टसामान्यपक्षे पुनरेतदेव विपरीतं योज्यम्। तन्न अनधिगतार्थाधिगन्तृत्वं ज्ञानस्य कथंचिद् विचारभारगौरवं सहत इत्यलक्षणमिति स्थितम्॥ अविसंवादकत्वमधुना विचार्यते—तत्किं प्रदर्शितार्थप्राप्त्या उत प्राप्तियोग्यार्थोपदर्शकत्वेन आहोस्विदविचलितार्थविषयत्वेन भवान् ज्ञानस्य प्रामाण्यं कथयति? यदि प्रथमः कल्पः, तदयुक्तम्, जलबुद्बुदादिमुमूर्षुपदार्थोत्पादितसंवेदनस्याप्रमाणतोत्पत्तेः, प्राप्तिकाले तस्य ध्वस्तत्वात्। अथ द्वितीयः, तदप्यचारु, प्राप्त्ययोग्यदेशस्थितग्रहनक्षत्रादिगोचरज्ञानस्याप्रामाण्यप्रसक्तेः, अनुचितदेशावस्थानेनैव प्राप्त्यनर्हत्वात्तेषाम्। अथ तृतीयः पक्षः, तत्राप्यविचलितविषयतां कथमवैषि? ज्ञानान्तरेण तद्विषयनिराकरणाभावादिति चेत्, एतदेवास्माभिरुदितं किं भवतः परुषमाभाति? न हि स्वपरप्रकाशि ज्ञानं बाधारहितं विमुच्यान्यस्य विषयानिराकरणं ज्ञानान्तरेण प्रेक्षामहे। तत्तदेव न्यायात्प्रमाणं भवद्भिरभ्युपगतमिति॥ अर्थोपलब्धिहेतुः प्रमाणमित्येतदपि न परीक्षां क्षमते, शरीरादेरपि तत्कारणतया प्रामाण्यप्रसङ्गात्। अव्यवहितमर्थोपलम्भकारणं प्रमाणं न देहादिकमिति चेत्, एवं तर्हि ज्ञानमेव स्वपराविर्भावकं निर्बाधकं च प्रमाणं न संनिकर्षादि, तत्सद्भावेऽ-

---

पाश्चात्यविकल्पसंबद्धं क्रियापदमिहापि संबध्यते, एवमुत्तरविकल्पेष्वपि। **समानयोगक्षेमत्वादिति**। अलब्धस्य लाभो योगः, लब्धस्य परिपालनं क्षेमः, तथा समानौ द्रव्यविशिष्टपर्यायपक्षेण तुल्यौ दूषणलाभलक्षणो योगश्च दूषणस्य दुरुत्तरत्वात् परिपालनरूपः क्षेमश्च यस्य पर्यायविशिष्टद्रव्यपक्षस्य तस्य भावस्तत्त्वं तस्मात्। **अथ सामान्यमिति**। अनधिगतः

न्यर्थपरिच्छेदाभावात् । तस्मादेतदेव चारु प्रमाणलक्षणमिति ॥

अधुना तत्संख्यामाह—प्रत्यक्षं चेत्यादि । तत्र सिद्धान्तप्रसिद्धपारमार्थिकप्रत्यक्षापेक्षयाक्षशब्दो जीवपर्यायतया प्रसिद्धः, इह तु व्यावहारिकप्रत्यक्षप्रस्तावादक्ष-

---

सन्नाधिगम्योऽर्थोऽभिधीयत इति शेषः । एवमुत्तरत्रापि । सिद्धान्तप्रसिद्धेत्यादि । तथा च भगवान् भद्रबाहुः—

जीवो अक्खो तं पइ जं वट्टइ तं तु होइ पच्चक्खं ।
परओ पुण अक्खस्स वट्टन्तं होइ पारोक्खं ॥ १ ॥
केसिंचि इंदियाइं अक्खाइं तदुवलद्धि पच्चक्खं ।
तं तु न जुज्जइ जम्हा अग्गाहगमिंदियं विसए ॥ २ ॥
नवि इंदियाइं उवलद्धिमंति विगएसु विसयसंभरणा ।
जह गेहगवक्खाइं जो अणुसरिया स उवलद्धा ॥ ३ ॥
धूमनिमित्तं नाण अग्गिम्मि लिंगियं जहा होइ ।
तह इंदियाइं लिंगं तं नाणं लिंगियं न कह ॥ ४ ॥ इति ।

[ जीवोऽक्षः तं प्रति यद् वर्तते तत्तु भवति प्रत्यक्षम् ।
परतः पुनरक्षस्य वर्तमानं भवति परोक्षम् । १ ॥
केषांचिदिन्द्रियाणि अक्षाणि तदुपलब्धि प्रत्यक्षम्
तत्तु न युज्यते यस्मात् अग्राहकमिन्द्रियं विषये ॥ २ ॥
नापीन्द्रियाणि उपलब्धिमन्ति विगतेषु विषयसंस्मरणात् ।
यथा गेहगवाक्षा योऽनुस्मर्ता स उपलब्धा ॥ ३ ॥
धूमनिमित्तं ज्ञानमग्नौ लैङ्गिकं यथा भवति
तथेन्द्रियाणि लिङ्गं तज्ज्ञानं लैङ्गिकं न कथम् ॥ ४ ॥ ]

लौकिका अप्यक्षशब्देन जीवमाहुः । यदाह गौडः—

ज्ञानात्मचक्रशकटे पाशकव्यवहारयोः ।
तुषे कर्षे पुमानक्षं तुच्छे सौवर्चलेन्द्रिये ॥
बिभीतकद्यूतचक्रनाभिगतावयवेष्वपि । पुंसि— इति ।

इदमिह सिद्धान्तरहस्यम्—

एगन्तेण परोक्खं लिंगियमोहाइयं च पच्चक्खं ।
इंदियमणोभवं जं तं संववहारपच्चक्खं ॥ १ ॥ ( विशे० भा० ९५ )

[ एकान्तेन परोक्षं लैङ्गिकमवध्यादि च प्रत्यक्षम् ।
इन्द्रियमनोभवं यत् तत् संव्यवहारप्रत्यक्षम् ॥]

अत्र 'ओहाइयं' इति अवधिमनःपर्यवकेवलरूपं ज्ञानत्रयम् ।

ध्वनिरिन्द्रियवचनो गृह्यते। ततश्चाक्षं प्रतिगतं प्रत्यक्षम्। यदिन्द्रियमाश्रित्योज्जिहीतेऽर्थसाक्षात्कारि ज्ञानं तत्प्रत्यक्षमित्यर्थः। एतच्च प्रत्यक्षशब्दव्युत्पत्तिनिमित्तं न तु प्रवृत्तिनिमित्तम्। स ह्येवं व्युत्पादितोऽपि साक्षाद् ग्राह्यग्राहकं ज्ञानविशेषं लक्षयति, तत्रैव रूढत्वात्, यथा गमनक्रियायां व्युत्पादितोऽपि गोशब्दः ककुदादिमन्तं पिण्डविशेषं गच्छन्तमगच्छन्तं वा गोचरयति, तत्रैव तस्य प्रसिद्धत्वात्, न गमनक्रियायुक्तमपि पुरुषादिकं विपर्ययादिति। ततश्च सर्वज्ञज्ञानानां यत्स्वरूपसंवेदनं तदपि प्रत्यक्षमित्युक्तं भवति। तत्रापि स्वरूपस्य ग्राह्यस्य साक्षात्करणसद्भावादिति। अक्षेभ्यः परतो वर्तते इति परोक्षम्, अक्षव्यापारनिरपेक्षमव्यापारेणासाक्षादर्थपरिच्छेदकं यज्ज्ञानं तत्परोक्षमिति भावः। चशब्दौ प्रत्यक्षपरोक्षयोस्तुल्यकक्षतां लक्षयतः। तेन यत्परे प्राहुः प्रत्यक्षं सकलप्रमाणज्येष्ठमित्यादि तदपास्तं भवति, द्वयोरपि प्रामाण्यं प्रत्यविशेषात्, विशदाविशदप्रतिभासविशेषस्य सतोऽपि ज्येष्ठतां प्रत्यनङ्गत्वात्। प्रत्यक्षस्य पुरःसरत्वात्परोक्षस्य कनिष्ठतेति चेत्, नायमेकान्तः, सर्वत्रान्यथानुपपन्नतावधारितोच्छ्वासनिःश्वासादिजीवलिङ्गसद्भावासद्भावाभ्यां जीवसाक्षात्कारिप्रत्यक्षक्षणेऽपि जीवन्मृतप्रतीतिदर्शनात्, अन्यथा लोकव्यवहाराभावप्रसङ्गात्। क्वचित्प्रत्यक्षगृहीतसंबन्धबलात्परोक्षं प्रवर्तत इति प्रत्यक्षस्य ज्येष्ठत्वकल्पने पश्य मृगो धावतीत्यादिशब्दबलात्कुकाढिकामोटनद्वारेण मृगविषयं, तथा स्मरणात्संकेतग्रहणाद्वा अपूर्वापूर्वार्थदर्शनकुतूहलादिना वनदेवकुलादिगोचरं परोक्षपूर्वं प्रत्यक्षं दृष्टमिति परोक्षस्य ज्येष्ठतासज्येत।

द्विधेति। सर्वं वाक्यं सावधारणं प्रवर्तते इति न्यायात्, अन्यथानियतार्थाप्रदर्शकत्वेन तदुच्चारणवैयर्थ्यप्रसङ्गात्, विपरीताकारनिराकरणचातुर्योयोगेन निरा

---

अक्षं प्रतिगतं प्रत्यक्षमिति। अक्षशब्दस्य नपुंसकत्वात् तत्पुरुषस्य चोत्तरपदप्रधानत्वात् नपुंसकत्वमेव प्राप्तमिति न वाच्यम्, परलिङ्गो द्वन्द्व-इत्यधिकारे अंशीति सिद्धहेमलिङ्गानुशासनसूत्रेण अंश्येव तत्पुरुष उत्तरपदलिङ्गभाक्, यथा- अर्धं पिप्पल्या अर्धपिप्पलीयम् अर्धो जरत्या अर्धजरतीयम्। तेनान्यत्र वाच्यलिङ्ग एव तत्पुरुषः। तत्र प्रत्यक्षो बोधः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानम्॥ उज्जिहीते उत्पद्यते। विपर्ययात् पुरुषादौ गोशब्दस्याप्रसिद्धत्वात्। तथा स्मरणादित्यादि। अपूर्वापूर्वार्थदर्शनविषये कुतूहलेन आदिशब्दात्प्रयोजनादिना कृत्वा हेतुना वा वनविषयं देवकुलादिविषयं वा परोक्षपूर्वमध्यक्षमीक्षितम्, कुतूहलाद्यपि कुत इत्याह-स्मरणात्, अनुभूतमर्थं हि स्मृत्वोत्पन्नकुतूहलः पुमान् प्रवर्तते इति। तथा संकेतग्रहणात्, गृहीतसंकेतो हि सकेतिते स्थाने जातदिदृक्षो द्रष्टुं प्रवर्तते॥

द्विधेति। सर्वं वाक्यं सावधारणमित्यादि। अत्र केचिदाहुः-यथा अत्र द्विधेत्युक्ते द्विधैव न त्वेकधा त्रिधा वेत्येवमन्ययोगव्यवच्छेदः, तथा चैत्रो धनुर्धर इत्यादिष्वपि चैत्रस्य

कादृक्षं प्रवृत्त्यासिद्धेः द्विधैव इत्यवधारणेन परपरिकल्पितविपरीतसंख्यान्तरं तिरस्कुरुते, तस्य युक्तिबाधितत्वात्। तथा हि – प्रत्यक्षमेवैकं प्रमाणमित्यसत्, परोक्षाभावे तस्यैव प्रामाण्यायोगात् । स हि काश्चित्प्रत्यक्षव्यक्तीरर्थक्रियासमर्थार्थप्रापकत्वेनाव्यभिचारिणीरुपलभ्यान्यास्तद्विपरीततया व्यभिचारिणीश्च, ततः कालान्तरे पुनरपि तादृशेतराणां प्रत्यक्षव्यक्तीनां प्रमाणतेतरते समाचक्षीत। न च पूर्वापरपरामर्शशून्यं पुरोवर्त्यर्थग्रहणपर्यवसितसत्ताकं प्रत्यक्षं पूर्वापरकालभाविनीनां प्रत्यक्षव्यक्तीनां सादृश्यनिबन्धनं प्रामाण्यमुपलक्षयितुं क्षमते। न चायं स्वप्रतीतिगोचराणामपि प्रत्यक्षव्यक्तीनां प्रामाण्यं परं प्रतिपादयितुमीशः। तस्मादवश्यंतया यथादृष्ट-

---

धनुर्धरत्वमेव स्यात् न शौर्यौदार्यधैर्यादयः। तदयुक्तम्, यतः सर्वं वाक्यं सावधारणमिति न्यायेऽप्याशाङ्कितस्यैव व्यवच्छेदः। परार्थं वाक्यमभिधीयते, यदेव च परेण व्यामोहादाशङ्कितं तस्यैव व्यवच्छेदः, चैत्रो धनुर्धर इत्यादौ चैत्रस्य धनुर्धरत्वायोग एव परैराशङ्कित इति तस्यैव व्यवच्छेदो नान्यधर्मस्य। इह तु चार्वाकनैयायिकादय ऐकध्यमनेकधा च प्रमाणमाहुः अतो नियतद्वैविध्यप्रदर्शनेन एकत्वबहुत्वे प्रमाणस्य प्रतिक्षिपति। एव चायमेवकारस्त्रिधा, अयोगान्ययोगात्यन्तायोगव्यवच्छेदकारित्वात्। यद् विनिश्चयः--

अयोगं योगमपरैरत्यन्तायोगमेव च।
व्यवच्छिनत्ति धर्मस्य निपातो व्यतिरेचकः ॥ १ ॥ इति।

निपात एवकारः, व्यतिरेचको निवर्तकः।

विशेषणविशेष्याभ्यां क्रियया च सहोदितः।
विवक्षातोऽप्रयोगेऽपि तस्यार्थोऽयं प्रतीयते ॥ २ ॥
व्यवच्छेदफलं वाक्यं यतश्चैत्रो धनुर्धरः।
पार्थो धनुर्धरो नीलं सरोजमिति वा यथा ॥ ३ ॥ इति।

**स हीत्यादि**। स प्रत्यक्षैकप्रमाणवादी चार्वाकः। **तादृशेतराणामिति**। तादृश्यश्चेतराश्चेति द्वन्द्वे पुंवद्भावाभावात् कथमिदमिति न वाच्यम्, सामान्यविशेषभावेन संबन्धात्, यथा–भूतमियं ब्राह्मणीति। तथा च माघः-

तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियतमपरिभुक्तं यद्दुकूलं दधानः।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ इति। (शिशु० ११-३३)

अत्र हि सफलस्य भावः सफलत्वम्, ततः किं सफलत्वं याति इत्याकाङ्क्षायां मण्डनश्रीरिति संबन्धः। तथात्रापि समाचक्षीत चार्वाकः– के प्रमाणेतरते। केषां तादृशेतराणाम्। इति जिज्ञासायामभिधीयते– प्रत्यक्षव्यक्तीनाम्। क्वचित्तादृशीतराणामित्यपि पाठो दृश्यते। अयम् चार्वाकः।

प्रत्यक्षव्यक्तिसाधर्म्यद्वारेणाधुनातनप्रत्यक्षव्यक्तीनां प्रामाण्यप्रत्यायकं परप्रतिपादकं च परोक्षान्तर्गतमनुमानरूपं प्रमाणान्तरमुररीकर्तव्यम्। परावबोधार्थं च प्रत्यक्षमेवैकं प्रमाणं नान्यदस्तीत्युल्लपन् उन्मत्ततामात्मनो लक्षयति। प्रत्यक्षेण परचेतोवृत्तिसाक्षात्करणाभावाद् व्यापारव्याहारचेष्टाविशेषदर्शनाद् बोधविशेषावगतौ परोक्षस्य प्रामाण्यं बलादापततीति न्यायात्। स्वर्गादृष्टदेवतादिप्रतिषेधं न प्रत्यक्षेण कर्तुमर्हति, तस्य सन्निहितमात्रविषयत्वात्। न चायं तदप्रतिषेधेन खरखरकचार्वाकतामाप्नोति, प्रमाणान्तरं च तत्प्रतिषेधार्थं च नेच्छतीति विषममेतत्कथं कुर्यादिति सविस्मयं नश्चेतः। किं च। प्रत्यक्षमपि कथं प्रमाणतां स्वीकरोतीति वक्तव्यम्, गृह्यमाणपदार्थान्वयव्यतिरेकानुकरणात्। तथा हि– तत्समग्रसामग्रीकपदार्थबलेनोन्मजति, तदभावे विस्फारितेक्षणयुगलस्यापि प्रमातुर्नोदीयते इति ब्रूषे, परोक्षेऽपि तर्हि समानमेवैतत्, तदपि बहिरर्थसामर्थ्यादेवोल्लसति, तत्संबद्धलिङ्गशब्दद्वारेण तस्योत्पत्तेः, अन्यथा परोक्षाभासताप्रसङ्गात्। तस्य चालीकत्वे पारमार्थिकपरोक्षप्रामाण्यक्षतेरयोगात्, अन्यथा प्रत्यक्षमपि गगनतलावलम्बिशशधरयुगलावलोकनचतुरमलीकमवलोकितमिति सकलविशददर्शनानि सत्यताभिमतान्यप्यलीकतामश्नुवीरन्। तन्न प्रमाणभूतं परोक्षं कदाचन गृह्यमाणपदार्थसत्तां विहायोत्पत्तुमुत्सहेत, इति प्रत्यक्षवत्प्रमाणकोटिमारोहति बलादिति स्थितम्॥ तथा यदपि परैरुक्तद्वयातिरिक्त प्रमाणसंख्यान्तरं प्रत्यज्ञायि, तत्रापि यत्पर्यालोच्यमानमुपमानार्थापत्तिवत्प्रमाणतामात्मसाक्षात्करोति, तदनयोरेव प्रत्यक्षपरोक्षयोरन्तर्भावनीयम्। यत्पुनर्विचार्यमाणं मीमांसकपरिकल्पिताभाववत्प्रामाण्यमेव नास्कन्दति, न तेन बहिर्भूतेन वा किंचिन्नः प्रयोजनम्, अवस्तुत्वादित्यपकर्णनीयम्। अथ कथमुप-

परावबोधार्थं चेत्यादि। प्रत्यक्षमेवैकं प्रमाणं नान्यदस्तीत्येतत् प्रतिपाद्यावबोधार्थमुल्लपन् उन्मत्ततामात्मनो लक्षयतीति संबन्धः। कुत इति। एतस्माद् न्यायात्। तमेव च न्यायमाह–प्रत्यक्षेणेत्यादि। अध्यक्षेण प्रतिपाद्यचेतोवृत्तेः प्रत्यक्षीकरणाभावात् गोबलीवर्दन्यायेन व्यापारशब्देन चेष्टाविशेषादन्यैव क्रिया गृह्यते, अन्यथा चेष्टाविशेष इति पुनरुक्तं स्यात्। व्याहारशब्दः चेष्टाविशेषोऽक्षिपक्ष्मसंकोचादिविशिष्टकायिको व्यापारः, तेषां दर्शनात्। बोधविशेषस्य प्रतिपाद्याभिप्रायस्यावगतावभ्युपगम्यमानायां हठात्परोक्षस्य प्रामाण्यमागच्छति। अयमभिप्रायः–प्रतिपाद्यस्यावबोधो भवतु, एतदर्थं चार्वाको वचनमुच्चारयति; परस्य च सचेतनतया स्तम्भाम्भोरुहादिभ्यो वैलक्षण्यमिदं च बोद्धुमभिप्रेतमिति नाध्यक्षेण लक्षयितुं क्षमते, व्यापारादिदर्शनात् प्रतिपाद्यस्य चैतन्याभिप्रायविशेषयोरवगतावङ्गीक्रियमाणायां परोक्षस्य प्रामाण्यं बलादायातीति। अदृष्टेति। पुण्यपापे। उन्मजति उत्पद्यते। उदीयते ईङ् गतौ दैवादिकः उदेतीत्यर्थः। तत्संबद्धेति। अनुमेयवाच्यरूपेण बाह्यार्थेन संबद्धौ लिङ्गशब्दौ।

मानस्य प्रामाण्यमिति ब्रूषे। तदुच्यते। प्रथमं हि विशददर्शनाधिगतगोपिण्डविशेषस्य 'यथा गौस्तथा गवयः' इति वाक्याकर्णनाहितात्मसंस्कारस्य पुंसोऽटव्यां पर्यटतो गवयपिण्डविशेषविषयविविक्तदर्शनपुरःसरं यत्पूर्वापरगोगवयपिण्डगोचरदर्शन-व्यापारसंपादितजन्मकम् 'अयं तेन सदृशोऽनयोर्वा सादृश्यमिति' सादृश्यविशिष्टपिण्डं पिण्डविशिष्टं सादृश्यं गोचरयत्संवेदनमुदीयते तदुपमानमिति। यदाहुस्तद्वादिनः-

तस्माद्यद्दृश्यते[1] तत्स्यात् सादृश्येन विशेषितम्।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ॥१॥ इति।

(श्लोकवार्तिके ४४४ पृष्ठे)

ततश्च पूर्वापरदर्शनयोः पुरोवर्तिगोगवयपिण्डग्रहणपर्यवसितसत्ताकत्वात् पूर्वापरपरामर्शशून्यत्वाद् विशदनिर्भासितया शब्दोल्लेखरहितत्वात् तदधिकमव्यभिचरितं व्यवहारकारि सादृश्यमवस्यदुपमानं स्वपरप्रकाशितया निर्बाधकत्वाच्च प्रमाणम्। पूर्वापरपिण्डातिरिक्तमपरं सादृश्यं नोपलभ्यते इति चेत्, कोऽयमुपालम्भो यदि प्रत्यक्षं तत्। यदि प्रत्यक्षे सादृश्यमुपमानगोचरत्वान्न प्रतिभाति, कोऽस्यापराधः। न हि ज्ञानान्तरे तद्गोचरो न प्रतिभातीति निर्गोचरं तदिति वक्तुं शक्यम्, इतरथोपमानेऽपि प्रत्यक्षनिर्ग्राह्या व्यक्तिर्न भातीति निर्गोचरमध्यक्षमनुषज्येत। तद् यथा स्वविषयेऽध्यक्षं प्रमाणं तथोपमानमपि। न हि द्वयोः प्रथमानयोरेकं प्रति विशेषाभावे पक्षपातः कर्तुं युक्तः। एतेन प्रत्यभिज्ञाज्ञानस्मृत्यूहादीनामविसंवादकानां परोक्षविशेषाणां प्रामाण्यं व्याख्यातमवगन्तव्यम्, समानन्यायानुपातित्वात्। तथा हि-प्रथममर्थदर्शनमात्मनि संस्कारमाधत्ते, तादृशदर्शनादसौ संस्कारः प्रबुध्यते, प्रबुद्धः पूर्वार्थविषयं स एवायं तज्जातीयो वेत्युल्लेखेन प्रत्यभिज्ञानमुत्थापयति, तस्योर्ध्वतिरश्चीनभेदसामान्यव्यवस्थापकत्वाद् असंजातपूर्वार्थगोचरदर्शनस्य तदुदयाभावात्,

यथा गौरित्यादि। यदुक्तम्--

कीदृग्गवय इत्येवं पृष्टो नागरकैर्यदा।
ब्रवीत्यारण्यको वाच्यं यथा गौर्गवयस्तथा ॥ इति। (श्लोकवार्तिके ४३३पृष्ठे)

पिण्डमिति। पिण्डशब्दः शरीरवृत्तिः पुनपुंसकः। यदुक्तम्-"मधुपिण्डो सुरातन्वोरिति"। यदिति। गवयपिण्डम्। दृश्यते इति। अटव्यामटता पुंसेति शेषः। सादृश्यं चेति। गोगवयगतम्। तदन्वितमिति। गोगवयपिण्डसंबद्धम्। तदधिकं गोगवयप्रत्यक्षग्राह्यादुत्कलितम्। अवस्यत् निश्चिन्वत्। ज्ञानान्तर इति। प्रत्यक्षे। तद्गोचरः उपमानविषयः। तदिति। उपमानम्। व्यक्तिः स्वलक्षणम्। तत् तस्मात्। एतेनेति। उपमानप्रामाण्यव्यवस्थापनेन। तस्येत्यादि। ननु किमिति संस्कारः स एवायं तज्जातीयो वेति द्वैधं प्रत्यभिज्ञाज्ञानं जनयति? आह-तस्य प्रत्यभिज्ञाज्ञानस्य परापरविवर्तव्यापि द्रव्यमूर्ध्वसामान्यं

---

१ मुद्रितपुस्तके "स्मर्यते" इति पाठोऽस्ति।

तथा स एव संस्कारस्तादृशार्थदर्शनेनाभोगादिना वा प्रबुद्धोऽनुभूतविषयासंप्रमोष-लक्षणं स्मरणमुपजनयति, अदृष्टार्थस्य पुंसः स्मरणानुपपत्तेरिति। ऊहोऽपि प्रत्यक्षानुमानासंवेद्यसाध्यार्थान्यथानुपपन्नत्वलक्षणलिङ्गसंबन्धग्रहणप्रवणः प्रमाणान्तरमिति कथयिष्यते। अर्थापत्तिस्तु प्रत्यक्षादिगोचरीकृते स्फोटादिपदार्थान्यथानुपपत्त्या दहन-शक्त्यादिकं पावकादेरर्थान्तरं पूर्वदर्शनगोचरात् समधिकमव्यभिचरित परिकल्पयतीति प्रमाणतां स्वीकरोत्येव, तल्लक्षणयोगात्। एवमन्यदपि प्रत्यक्षगोचराधिक्य-संपादकं निराकाङ्क्षतया व्यवहारकारि यत्संवेदनं तत्तत्प्रमाणमिति समर्थनीयम्, स्व-परप्रकाशिनिर्बाधत्वात्, पूर्वापरसोपानपद्धतिदर्शनोत्तरकालभावि तत्संख्यासंवेदनवत्। सर्वेषां चैतेषां परोक्षेऽन्तर्भावः, अन्यथानुपपन्नार्थान्तरदर्शनद्वारेण प्रस्तुतार्थसंवेदन-चतुरत्वादिति। किंचिद्विशेषात्तु प्रमाणान्तरपरिकल्पने प्रमाणेयत्ता विशीर्येत, आनन्त्यप्राप्तेः, आवरणक्षयोपशमविचित्रतया ज्ञानप्रवृत्तेर्विचित्रत्वादिति। ननु चैवं सति यत्परोक्षस्य द्वैविध्यं वक्ष्यमाणमनुमानशाब्दभेदेन तदपि कथमुपपत्स्यते, तत्रापि ह्याप्तप्रणीतवचनप्रभवज्ञानस्यार्थान्यथानुपपन्नत्वेनानुमानान्तर्भावो न दुरुपपादः। ततश्चानुमानमेवैकमवशिष्यते तदेव परोक्षशब्देन यद्युच्येत युक्तमास्ते, विदुषामभिधानं प्रत्यनादरात्; सत्यमेतत्, एवं तु मन्यते तद् यद्यपि कयाचित्प्रक्रियया-

मृदिव स्थासकोशादिषु सदृशपरिणामः, तिरश्चीनसामान्य खण्डमुण्डादिषु गोत्ववत्, तयो-र्द्वयोरपि निर्णायकत्वात्। यदि पुनर्द्वैधं प्रत्यभिज्ञाज्ञानं नोज्जृम्भते, तदोर्ध्वतिरश्चीनभेद-भिन्नसामान्यव्यवस्था न स्यादिति। अथ पूर्वमर्थदर्शनम्, ततः संस्कारः, ततस्तस्य प्रबोधः, तदनु प्रत्यभिज्ञाज्ञानमिति परपराश्रयणनिबन्धनाभावात् प्रथमाक्षसंनिपाते एव प्रत्यभिज्ञाज्ञानं किं नोत्पद्यत इत्याह— न संजातं पूर्वार्थगोचरं दर्शनं यस्य तस्य पुंसः प्रत्यभिज्ञाज्ञानोदयाभावात्, प्रत्यभिज्ञाज्ञानं हि तादृग्दर्शनत. संस्कारप्रबोधे, स च सति संस्कारे, संस्कारश्च पूर्वमर्थदर्शने एवेति ॥ **आभोगादीत्यादि**। आभोगः प्रणिधानमवधानमिति यावत्, आदि-शब्दादभ्यासादिपरिग्रहः। तथा च न्यायशास्त्रम्—प्रणिधाननिबन्धाभ्यासलिङ्गसादृश्यपरि-ग्रहाश्रयाश्रितसंबन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषक्रियार्थि-त्वरागधर्माधर्मनिमित्तेभ्यः (गौ० ३-२-४३) इति। एतद्व्याख्या च तत एव न्याय-शास्त्रादवगन्तव्या, इह तु नोच्यते, सुगमत्वात्, ग्रन्थगौरवभयाच्च। **अनुभूतो विषयो** येन तदनुभूतविषयं ज्ञानं तस्यासम्प्रमोषोऽभ्रंशो ज्ञानानुवृत्तिरिति यावत्, स एव लक्षणं यस्य तत्तथा। **ऊहोपीत्यादि**। प्रत्यक्षानुमानाभ्यामसंवेद्यः साध्यार्थान्यथानुपपन्नत्वस्वरूपो यो लिङ्गस्य साध्येन सार्धं संबन्धस्तस्यादाने सज्जस्तत्पर इति यावत्। **तल्लक्षणयोगादिति**। प्रमाणलक्षणोपपत्तेः। **सर्वेषामित्यादि**। एतेषामुपमानादीनाम्। तथा हि—एवमुपमानेऽन्यथा-नुपपन्नार्थान्तरदर्शनद्वारेण प्रस्तुतार्थवेदनचतुरत्वं स्मर्यमाणदृश्यमानयोर्गोगवयपिण्डयोरवि-लक्षणविषाणाद्यवयवयोगित्वमन्यथा नोपपद्यते, यदि तयोः किंचित्सारूप्यं न स्यात्। एवं

**नुमानान्तर्भावयितुं शक्यं शाब्दम्, तथापि तत्प्रति विप्रतिपद्यन्ते परे। अतस्तस्याहत्य प्रामाण्यं समर्थनीयम्। न चापृथग्भूतस्य तद्विविक्तं वक्तुं शक्यम्, अतः पार्थक्येनोपन्यासः। अनेन चैतदुपलक्षयति- अन्येषामपि परोक्षविशेषाणामनुमानान्तर्भावसंभवेऽपि यं यं प्रति परेषां विप्रतिपत्तिस्तं तं परोक्षाद्विष्कृष्य विविक्तयुक्त्युपन्यासेन तस्य तस्य प्रामाण्यमावेदनीयम्। तथा च शास्त्रान्तरे यदूहादीनां लक्षणं अकारि आचार्यैस्तद् युक्तमेवेत्युक्त भवति। कथं तर्हि मीमांसकपरिकल्पितोऽभावो न प्रमाणम्? निर्गोचरत्वादिति ब्रूमः। तथा हि—प्रत्यक्षमेवान्वयव्यतिरेकद्वारेण भूतलमेवेदं घटादिर्नास्तीति वस्तुपरिच्छेदप्रावीण्यमाबिभ्राणं तदधिकग्राह्यार्थाभावात् प्रमाणान्तरं परिकल्प्यमानं निरस्यतीति किं नश्चिन्तया? तस्य सदसद्रूपवस्तुग्राहिणः प्रतिप्राणि प्रसिद्धत्वात्। अथ कदाचिदभिदध्यात्, अध्यक्षं भावांशमेवाकलयति, इन्द्रियद्वारेणोत्पत्तेः, तस्य च भावांशे एव व्यापारात्, नास्तिताज्ञानं तु वस्तुग्रहणोत्तरकालं प्रतियोगिस्मरणसद्भावे मानसमक्षव्यापारनिरपेक्षमुन्मज्जति।**

---

प्रत्यभिज्ञाने इदानीं दृश्यमानः पर्यायोऽन्यथा नोपपद्यते, यदि पूर्वानुभूतः परंपरया एतस्य कारणभूतो द्रव्यरूपतयैतदात्मा पर्यायो न स्यात्। तथा स्मरणेऽपि संस्कारोऽन्यथा नोपपद्यते, यदि पूर्वानुभवो न भवति। संस्कारप्रबोधश्च पूर्वानुभवस्मारकः क्वचित्तादृशदर्शनेन, क्वचिच्चाभोगादिभिरिति प्रागेवाभिहितम्। एवमूहेऽपि कतिपयधूमधूमध्वजव्यक्तीनामव्यभिचरितं साहचर्यं प्रत्यक्षेणोपलभ्यमानमन्यथा न जाघटीति, यदि सर्वत्र धूमाग्निव्यक्त्योरन्यथानुपपन्नत्वलक्षणः संबन्धो न स्यात्। अर्थापत्तौ तु वह्निसंयोगात्करतलगतं स्फोटलक्षणं कार्यं प्रत्यक्षेणोपलक्ष्यमाणमन्यथा नोपपद्यते, यदि वह्नेः काचिद्दाहिका शक्तिर्न स्यात्। पूर्वापरसोपानपद्धतिदर्शनोत्तरकालभाविशतादिसंख्यासंवेदने तु पर्यन्तसोपानानुभवः पूर्वानुभूतनवनवत्यादिसोपानसंस्मरणसंवलितोऽन्यथा न संगच्छते, यदि शतादिसंख्या सोपानानां न स्यादिति। एवं यथाबुद्धिसंप्रदायमुपमानादिष्वन्यथानुपपन्नार्थान्तरदर्शनद्वारेण प्रस्तुतार्थवेदनचतुरत्वं भावितम्, अन्यथापि कुशलैरभ्यूह्यमिति॥ **आहत्येति**। पूर्वपक्षादिभिर्निष्टङ्क्य।

**ऊहादीनां लक्षणमकारीति**। यथा-उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानमूहः, यथेदमस्मिन् सत्येव भवति असति न भवत्येवेति च। आदिशब्दात्संस्कारोद्बोधनिबन्धना तदित्याकारा स्मृतिः, यथा स देवदत्त इति। दर्शनस्मरणकारणकं संकलनं प्रत्यभिज्ञानम्, यथा तदेवेदमिति। **मीमांसककल्पित इत्यादि**। ते ह्येवमाहुः– प्रत्यक्षादिप्रमाणपञ्चकग्राह्याद् भावाद् भिन्नत्वादभावस्य ग्राहकं पृथगेवाभावप्रमाणम्। न चाभावस्यावस्तुत्वेन तद्ग्राहकप्रमाणाभावः, अभावस्यावस्तुत्वे प्रागभावादिभेदानुपपत्तेः, यदवस्तु न तस्य भेदः, यथा खपुष्पादेः, अस्तित्वाभावस्य भेदः प्रागभावः प्रध्वंसाभावोऽन्योन्याभावोऽत्यन्ताभावश्चेति। किं च अभावस्यावस्तुत्वेऽर्थानामसांकर्यं न स्यात्, असांकर्यहेतोः प्रागभावादेरवस्तुतयासत्त्वात्, तथा च प्रतिनियतव्यवहाराभावः।

**तदुक्तम्**—

**न तावदिन्द्रियेणैषा[1] नास्तीत्युत्पाद्यते मतिः ।**
**भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि ॥ १ ॥**
**( श्लो० वा०, पृ० ४७९ )**

**गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।**
**मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥१॥ इति ।**
**( श्लो० वा०, पृ० ४८२ )**

**अत्रोच्यते। भावांशादभावांशस्तर्हि अभिन्नो भिन्नो वा ? अभिन्नश्चेत्, कथम-ग्रहणम्, भावांशादव्यतिरिक्तत्वादेव, तत्स्वरूपवत् । भिन्नश्चेत्, घटाद्यभावविनि-र्लुठितं भूतलमाद्यदर्शनेन गृह्यते इति घटादयो गृह्यन्ते इति प्राप्तम्, तदभावाग्रह-णस्य तद्भावग्रहणनान्तरीयकत्वात् । तथा च अभावोऽपि पश्चात्प्रवर्तमानस्तानुत्सार-यितुमपटिष्ठः स्यात्, अन्यथा प्रत्यक्षमसंकीर्णस्य संकीर्णताग्रहणात् भ्रान्तमापनी-पद्येत। किं च। प्रमाणाभावादर्थाभावोऽभावप्रमाणेन साध्यते इति भवतोऽभिप्रायः-**

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।**
**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥१॥ ( श्लो० वा० पृ०, ४७३ )**

तदुक्तम्—

न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता।
कार्यादीनामभावः को भावो यः कारणादिनः ॥१॥ (श्लो० वा०, पृ० ४७४)
वस्त्वसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रिता ।
क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ॥२॥
नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम् ।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥३॥
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः ।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥४॥
क्षीरे दधि भवेदेवं दध्नि क्षीरं घटे पटः ।
शशशृङ्गं पृथिव्यादौ चैतन्यं मूर्तिरात्मनि ॥५॥
अप्सु गन्धो रसश्चाग्नौ वायौ रूपेण तौ सह ।
व्योम्नि संस्पर्शिता ते च न चेदस्य प्रमाणता ॥६॥ (श्लो०वा०पृ० ४७३--७४)

ततोऽभावस्य वस्तुत्वे तद्ग्राहकं षष्ठं प्रमाणमभ्युपगन्तव्यमिति । **विनिर्लुठितम्** रहितम् । **तदभावेत्यादि** । घटाभावपरिच्छेदस्य घटसद्भावज्ञानपरतन्त्रत्वात् । **तान्** घटादीन्। **असंकीर्णस्य** केवलभूतस्य । **संकीर्णता** घटादिसाहित्यम् । **प्रमाणपञ्चकमित्यादि । वस्तुनो**

---

१. मुद्रितपुस्तके " इन्द्रियैरेषा " इति पठ्यते ।

**इति वचनात् । तद्युक्तम् । यतः प्रमाणाभावः कथं ग्राह्यः ? तद्ग्राहकप्रमाणान्तराभावादिति चेत्, तस्याप्यभावग्रहणे तद्ग्राहकप्रमाणान्तराभावो ग्राह्य इत्यनवस्था । अथ अर्थाभावात्प्रमाणस्य प्रमाणाभावाच्चार्थस्याभावः प्रतिपद्यत इति मन्येथाः, तदेतदितरेतराश्रयं दुर्घटमापद्येत । न यावदर्थाभावो गृहीतः तावत्प्रमाणाभावः सिध्यति, अर्थाभावः प्रमाणाभावात्सेत्स्यतीत्यावर्तनात् । अथेन्द्रियवत् स्वयमविज्ञातोऽपि प्रमाणाभावोऽर्थाभावं ज्ञापयिष्यतीत्यभिदधीथाः, तदयुक्तम्, तस्य तुच्छतया सकलशक्तिविरहलक्षणत्वात्, इन्द्रियस्य तु तद्विपर्यस्ततया ज्ञानोत्पादनक्षमत्वात् । तस्मात् प्रत्यक्षमेव भूतलादिप्रतिनियतवस्तुग्राहितां बिभर्ति । यदि तद्विपरीतघटादिप्रतियोगिवस्त्वन्तरवैविक्त्यं तस्याकलयति नान्यथा, विजातीयव्यवच्छेदाभावे तस्यैव प्रतिनियतत्वासिद्धेः, सकलसंकीर्णतया ग्रहणप्रसङ्गात्, अतोऽधिकग्राह्याभावान्निर्विषयतयाभावाख्यं प्रमाणं यत् परैः पर्यकल्पि तदप्रमाणमिति स्थितम् ।**

**द्विधेत्यस्मिन् सत्यपि 'प्रत्यक्षं च परोक्षं च' इति नियतद्वैविध्यप्रदर्शनेन सौगतपरिकल्पितं 'प्रत्यक्षमनुमानं चेति' द्वैविध्यमपाक्षिपति, तदाकूतेन तस्यायोगात् । प्रत्यक्षातिरिक्तं हि तादात्म्यतदुत्पत्तिलक्षणसंबन्धोपलक्षितकार्यस्वभावानुपलब्धिरूपलिङ्गत्रयसंपादितजन्मकमनुमानमेव प्रमाणं न शब्दोहादिकम्, संबन्धविकलत्वादिति तदाकूतम् । अयुक्तं चैतत्, प्रत्यक्षानुमानातिरिक्तप्रमाणान्तराभावग्रहणोपायाभावात् । न तावत्प्रत्यक्षात् प्रमाणान्तराभावावगतिः, तस्य स्वलक्षणविषयत्वेनाभावग्राहिताविरोधात् । नापि स्वभावकार्यानुमानाभ्याम्, तयोर्वस्तुसाधनत्वात् । नाप्यनुपलब्धेः, तस्या अप्यत्यन्ताभावसाधनविरोधात् । सा हि चतुर्विधा वर्ण्यते मूलभेदापेक्षया, तद् यथा – विरुद्धोपलब्धिर्विरुद्धकार्योपलब्धिः कारणानुपलब्धिः स्वभावानुपलब्धिश्चेति । न तावद्विरुद्धोपलब्धेः प्रमाणान्तरस्यात्यन्ताभावः, दृश्यात्मनो**

---

भावरूपस्य सत्तावबोधार्थं प्रमाणपञ्चकं यत्र वस्तुमात्रे नोत्पद्यते, तत्र घटादिविषयेऽभावस्य प्रामाण्यम् । क्वचिद् 'वस्त्वसत्तेति' पाठः, स त्वभावप्रमाणमित्यनेन संबन्धनीयः । **तदिति** । प्रमाणस्य । । **तस्यापि** प्रमाणान्तरस्य । **एवमिति** । अमुना यदित्यादिना वक्ष्यमाणप्रकारेण **तद्विपरीतेति** । ततो भूतलाद्विलक्षणाम् । वैविक्त्य राहित्यम् । **तस्य** भूतलस्य ।

**तद् यथेत्यादि** । विरुद्धोपलब्धिर्यथा—नात्र शीतस्पर्शः, अग्नेरिति १ । विरुद्धकार्योपलब्धिर्यथा–नात्र शीतस्पर्शः, धूमादिति २ । कारणानुपलब्धिर्यथा–नात्र धूमः, अग्न्यभावादिति ३ । स्वभावानुपलब्धिर्यथा–नात्र धूमः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेरिति ४ । शेषास्तु सप्तापि अनुपलब्धयो धर्मबिन्दुप्रभृतिशास्त्रप्रतिपादिता एष्वेव चतुर्षु भेदेष्वन्तर्भवन्ति, इति प्रतिभेदरूपत्वान्न पृथगभिहिताः। **दृश्यात्मन इति** । दृश्यस्वरूपस्य **विरुद्धस्य वह्न्यादेः** ।

विरुद्धस्य विधानेन इतराभावसाधनात्, संनिहितदेश एव प्रतियोग्यभावसिद्धेः। एतेन विरुद्धकार्यानुपलब्धिरपि व्याख्याता, तस्या अपि प्रतिषेध्यविरोधिसंनिधापनद्वारेणाभावसाधकत्वात्। कार्यानुपलब्धिरपि तद्देशाशङ्कितकार्यस्यैवाभावं साधयति न सर्वत्र, स्वयमसिद्धत्वात्। स्वभावानुपलब्धिरप्येकज्ञानसंसर्गिपदार्थोपलम्भरूपा तद्देश एव प्रतिद्वन्द्व्यभावं गमयति। अतः प्रमाणान्तरस्यापि क्वचिन्निषेधः स्यात् न सर्वत्र। तन्न प्रमाणान्तरबाधकं समस्ति॥ प्रत्यक्षानुमानयोश्च प्रामाण्यं कुत इति चिन्त्यम्। न तावत्प्रत्यक्षात्, तस्य निर्विकल्पकतया सतोऽप्यसत्कल्पत्वात्। तत्पृष्ठभावी विकल्पस्तु न स्वलक्षणाम्भोधिमध्यमवगाहते, तत्कथं तत्राप्रविष्टस्तत्स्वरूपं निश्चिनुयात्। अप्रमाणभूताच्च तस्मात्प्रामाण्यनिर्णय इति निबिडजडिमाविष्करणं भवताम्। अनुमानात्प्रामाण्यनिर्णय इति चेत्, न, तस्यापि स्वलक्षणाद् बहिः प्लवनात्। अप्रामाण्यव्यवच्छेदस्तेन साध्यते इति चेत्, न, व्यवच्छेदस्य व्यवच्छिन्नान्यतिरेकात्, इतरथान्धकारनर्तनकल्पमनुमानमासज्येत, निर्विषयत्वात्। किं च। तत्प्रामाण्यनिर्णायकमनुमानं प्रमाणमप्रमाणं वा। न तावदप्रमाणम्, ततः प्रामाण्यासिद्धेः। नापि प्रमाणम्, तत्प्रामाण्यसाधकाभावात्। न हि प्रत्यक्षात् तत्सिद्धिः, विकल्पशून्यतयाकिंचित्करत्वात्, इत्युक्तम्। अनुमानात्तु तत्साधने विकल्पयुगलं तदवस्थमेवावतिष्ठते तत्प्रामाण्यसाधनेऽप्यनुमानकल्पना इत्यनवस्था। किं च। गृहीतसंबन्धस्यानुमानं प्रवर्तेत, संबन्धस्त्रिकालगोचरो ग्राह्यः, न च प्रत्यक्षं तं लक्षयितुं क्षमते, पूर्वापरक्षणत्रुटितरूपवार्तमानिकक्षणतदुत्तरकालभाविनो विकल्पस्यापि व्यावहारिकाभिप्रायेण तन्निष्ठताभ्युपगमात्। अनुमानाद् ग्रहीष्यति इति चेत्, ननु तदपि संबन्धपूर्वकं प्रवर्तते, तद्ग्रहणेऽपीयं वार्ता इति अनवस्था। तस्मादनुमानमभिलषता गत्यन्तराभावात् तत्संबन्ध-

**इतरेति**। प्रतिषेध्यस्य शीतादेः। **स्वभानुपलब्धिरिति** दृश्यानुपलब्धिः। **एकेत्यादि**। एकस्य चक्षुरादिज्ञानस्य ग्राह्यं चक्षुरादिप्रणिधानाभिमुखं भूघटादिवस्तुद्वयमन्योन्यापेक्षमेकज्ञानसंसर्गि कथ्यते, तयोर्हि सतोर्नैकनियता प्रतिपत्तिः स्यात्, परिच्छेदयोग्यताया द्वयोरप्यविशेषात्। ज्ञाने वस्तुद्वयसंसर्गश्च तदाकारयोरेकस्मिन् ज्ञाने संसर्गाद् वस्तुनोरप्युपचारेण संसर्गव्यपदेशात्। तत एकस्मिन् ज्ञाने संसर्गः संबन्धो विद्यते यस्य भूतलादेर्घटादिनेति प्रकरणात् स्वयमूह्यम्, स चासौ पदार्थश्च तस्योपलम्भपरिच्छेदो रूपं यस्याः स्वभावानुलब्धेः सा तथा; केवलभूतलोपलम्भरूप इति यावत्। **तद्देश एवेति**। भूतलदेश एव। **प्रतिद्वन्द्विनो** घटादेः। **स्वलक्षणाम्भोधीति**। स्वलक्षणं प्रत्यक्षानुमाने, ते एव विकल्पस्य सामान्यविषयत्वेनाविषयत्वाद् अम्भोधिः। **तत्स्वरूपं** प्रत्यक्षानुमानस्वरूपम्। **तदिति**। तयोः प्रत्यक्षानुमानयोः। **तत्प्रमाण्येति**। तस्य प्रत्यक्षानुमानप्रामाण्यनिर्णायकानुमानस्य। **तत्साधन इति**। प्रामाण्यनिर्णायकानुमानप्रामाण्यसाधने। **तदवस्थ-**

ग्रहणप्रवणस्त्रिकालगोचरोऽव्यभिचारी वितर्कोऽभ्युपगन्तव्यः । तथा च प्रस्तुतद्वैविध्यस्य विघटितत्वात्, अन्यदपि यदेवंविधमविसंवादि ज्ञानं तत्प्रमाणमस्तु इत्यलं शुष्काभिमानेनेति । यदि पुनः साध्यार्थान्यथानुपपन्नहेतुसंपादितमनुमानमिष्येत, तदा प्रत्यक्षमनुमानं चेत्यपि द्वैविध्यं घटामटेदेव ; प्रत्यक्षव्यतिरिक्तज्ञानस्य सामस्त्येनानुमानेऽन्तर्भावसंभवात्, अन्यथानुपपन्नार्थान्तरमन्तरेण परोक्षार्थविषयप्रतीतेरभावादिति॥

सांप्रतमन्यथा सूत्रावयवेनैव प्रकृतनियमकारणमाह– मेयविनिश्चयादिति । द्विधैवेति च काकाक्षिगोलकन्यायेनात्रापि संबन्धनीयम् । ततश्चायमर्थः—द्वाभ्यामेव प्रकाराभ्यां मेयस्य ग्राह्यार्थस्य निश्चयात् स्वरूपनिर्णयात्, द्वे एव प्रमाणे न न्यूनमधिकं चेति । अयमत्राभिप्रायः– स्वसंवेदनं प्रति निखिलज्ञानानामेकरूपतया साक्षात्करणचतुरत्वात् नास्त्येव भेदः; बहिरर्थं पुनरपेक्ष्य कश्चिच्चक्षुरादिसामग्रीबललब्धसत्ताकः स्वावयवव्यापिनं कालान्तरसंचरिष्णुं स्थगितक्षणविवर्तमलक्षितपरमाणुपारिमाण्डल्यं संनिहितं विशदनिर्भासं सामान्यमाकारं साक्षात्कुर्वाणः प्रकाशः प्रथते, तत्र प्रत्यक्षव्यवहारः प्रवर्तते । यः पुनर्लिङ्गशब्दादिद्वारेण नियतानियतसामान्याकारावलोकी परिस्फुटतारहितः खल्वात्मनोऽर्थग्रहणपरिणामः समुल्लसति स परोक्षतां स्वीकरोति । न चैतौ प्रकारौ विहाय प्रकारान्तरेण ज्ञानप्रवृत्तिं पश्यामः, न चापश्यन्तः प्रमाणान्तरपरिकल्पनं क्षमामहे, न च द्वयोः प्रथमानयोरेकं निह्नवानमुपेक्षामहे, विशेषाभावात्; तस्मादेतदेव द्वैविध्यमुररीकर्तव्यमिति स्थितम् ॥ १ ॥

सांप्रतं यदस्माभिः प्राग् विवृण्वद्भिर्व्युदपादि, यदुत विप्रतिपन्नाव्युत्पन्नव्यामोहापोहसहमिहेदं प्रमाणलक्षणमिति तत्सूत्रदर्शनादेव विमलबुद्धयोऽवगच्छेयुः । मन्दमतयस्तु तावता न भोत्स्यन्त इति तद्धितविधित्सया व्यक्तं प्रमाणलक्षणाभिधानफलं प्रतिपिपादयिषुरपि सपूर्वपक्षं निराकाङ्क्षं लक्षयेयुस्ते इति तावत् पूर्वपक्षमुत्थापयन्नाह–

**प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः**
**प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥ २ ॥**

इह वचनमुच्चारयता विमृश्यभाषिणा प्रत्यवमृश्यम्– किमिदं मामकं वचनं श्रोतृसंस्काराधायकमुत नेति । इतरथा पर्यालोचितकारितास्य हीयते । श्रोतृसंस्काराधायकं चेत्, उच्चारयति अन्यथा विपर्यय इति । एतत्तु प्रमाणलक्षणवाक्यं सकल-

मिति । तदप्यनुमानं प्रमाणमप्रमाणं चेति । पारिमाण्डल्यमिति । परिमण्डलाः परमाणवः, तेषां भावः, यणि अनुशतिकादित्वात् उभयपदवृद्धौ पारिमाण्डल्यं वर्तुलत्वम्, न्यायकुमुदचन्द्रे प्रभाचन्द्रेणाप्येवं व्याख्यातत्वात् । अन्ये तु पारिमाण्डल्यं परमाणुपरिमाणमेव इत्याहुः । नियतानियतेत्यादि । विजातीयेभ्यो व्यावृत्तत्वात् नियतः, सजातीयेभ्यश्चाव्यावृत्तत्वात् सर्व एवानियतः, ततो नियतानियतश्चासौ सामान्याकारश्चेति विग्रहः । एतौ प्रत्यक्षपरोक्षरूपौ ॥१॥



1008

जनानादिप्ररूढार्थप्रत्यायकत्वादश्रोतृसंस्काराधायकम् । अत आह –प्रसिद्धानि प्ररूढानि, नाधुना साध्यानीत्यर्थः । प्रमाणानि प्रत्यक्षादीनि, परोक्षगतभेदापेक्षया बहुवचनं व्यक्तिभेदे सामान्यमपि कथंचिद् भिद्यते इति दर्शनार्थम् । तथा हि । तदविवक्षितव्यक्तिकमेकरूपतां बिभर्ति प्रमाणमिति; व्यक्त्यवच्छेदेन पुनरवच्छिद्यमानं नानाकारतामादत्ते प्रत्यक्षानुमानशाब्दानि प्रमाणानीति, व्यक्तिव्यतिरिक्ताव्यतिरिक्तरूपत्वात्तस्य । तथा हि– शब्दाच्चक्षुरादेर्वा दूराद् वृक्ष इति प्रत्यये धवखदिरपलाशादिविशेषानपेक्षया साधारणं वृक्षत्वमेव चकास्ति, तस्मात् तेभ्यो भिन्नं तद्, व्यतिरेकिणाकारेण ज्ञाने प्रतिभासनाद् घटादिवत् । परिस्फुटद्धवखदिरपलाशादिविशेषावलोकनवेलायां तु न तदतिरेकिणा रूपेण प्रकाशते इत्यभिन्नम्, तदव्यतिरिक्तस्य संवेदनात्, तत्स्वरूपवत् । विशेषाभिन्नमेव रूपं तात्त्विकं सामान्यस्य, तस्यैव दाहपाकाद्यर्थक्रियाक्षमत्वात् । भिन्नं पुनः कल्पनाबुद्धिविठपितत्वादवस्तुरूपमिति चेत्, न, द्वयोः प्रकाशमानयोरेकस्य निह्नोतुमशक्यत्वात् । अन्यथा भिन्नमेव रूपं स्वाभाविकमितरत्तु कल्पनाबुद्धिदर्शितमित्यपि वदतां न वदनभङ्गः स्यात् । अर्थक्रियाकारिताविशेषस्तु भिन्नेऽपि रूपे न दुरुपपादः, तस्यापि ज्ञानसाधारणव्यवहारकरणदक्षत्वात् । न चार्थक्रिया वस्तुलक्षणमिति निवेदयिष्यामः, तस्मात्सर्वत्र भिन्नाभिन्नौ सामान्यविशेषाविति दर्शनार्थो बहुवचननिर्देशः । आसतां तावत्प्रमाणानि, व्यवहारश्च तत्कृतः प्रसिद्ध इति संबन्धः । चशब्दोऽपिशब्दार्थः । तेनायमर्थः– यदर्थं प्रमाणपरीक्षणमसावपि जलपानशीतत्राणादिर्व्यवहारोऽनादिरूढः, तन्निरर्थकं प्रमाणलक्षणाभिधानमित्यभिप्रायवानपि परः परुषतापरिजिहीर्षयात्मनोऽन्यथा प्राह— प्रमाणलक्षणस्योक्तौ परप्रत्यायनलक्षमासाधारणप्रमाणधर्मकथनरूपायां ज्ञायते निर्णीयतेऽस्माभिर्न प्रयोजनं तत्फलम्, अतिसूक्ष्मत्वात्तावकाभिसंधेरिति काक्वा प्रश्नयत्युल्लुण्ठयति चेति । किं च प्रमाणलक्षणमनिश्चितं वाभिधीयते, निश्चितं वा स्वरूपेणेति पक्षद्वयम् । न तावदनिश्चितम्, अनिश्चितस्य लक्षणत्वायोगात्, उन्मत्तकविरुतवत् । अथ निश्चितम्, तत्किमप्रमाणात्प्रमाणाद्वा । न तावदप्रमाणात्, अप्रमाणस्य निश्चायकत्वायोगात् । यदि पुनरप्रमाणमपि निश्चायकमिति संगीर्येत, तदा प्रमाणपर्येषणं विशीर्येत, नैरर्थक्यापत्तेः, अप्रमाणादपि निश्चायकत्वाभ्युपगमात् । अथ प्रमाणात्, तत्किम-

---

विठपितत्वादिति । उपार्जने विपूर्वः ठप् सौत्रो धातुः । तस्यापीत्यादि । तस्य विशेषभिन्नसामान्यस्य ज्ञानं च साधारणव्यवहारश्च तयोर्विधाने कुशलत्वात्, तथा हि– सामान्यं दूराद् धवलधावलेयादिविशेषाप्रतिभासेऽपि सामान्येन गौर्गौरिति ज्ञानं जनयति, तथा अयं गौरयं गौरिति साधारणव्यवहारं चेति । यदि पुनर्विशेषेभ्यो भिन्नं नाभ्युपगम्येत सामान्यम्, तदा तन्निबन्धनं ज्ञानं सादृश्यव्यवहारश्च प्रलयं यायादिति ॥ २ ॥

लक्षणम्, लक्षणोपेतं वा। अलक्षणं चेन्निश्चायकं प्रमाणम्, तर्हि सर्वप्रमाणानां लक्षणाभिधानमनर्थकम्, तद्व्यतिरेकेणाप्यर्थनिश्चयसिद्धेः, भवदभिप्रेतलक्षणनिश्चायकप्रमाणवत्। अथ लक्षणोपेतम्, तत्रापि विकल्पयुगलमनिवारितप्रसरमनुधावति, तल्लक्षणं निश्चितमनिश्चितं वा। न तावदनिश्चितं लक्षणं लक्ष्यं लक्षयति। निश्चयोऽपि प्रमाणादप्रमाणाद्वा। अप्रमाणान्निश्चयासिद्धेः प्रमाणादिति वक्तव्यम्। तदप्यलक्षणं सलक्षणं वा। अलक्षणत्वे पूर्वस्यार्थग्रहणे किं क्षूणम्। सलक्षणत्वे त्वेतल्लक्षणं निर्णीतमनिर्णीतं चेति तदेवावर्तते। तन्न प्रमाणलक्षणाभिधानोपायोऽस्ति, तस्मात्प्रसिद्धानि प्रमाणानि इत्यङ्गीकर्तव्यमिति ॥ २ ॥

अधुना चार्यागृहीतस्तावकीनोऽभिप्रायोऽस्माभिरिति परं प्रत्याययंस्तन्मतमनुद्राव्य तदेवानुमन्यमानस्तथापि लक्षणोक्तेः साफल्यमावेदयन्नाह —

प्रसिद्धानां प्रमाणानां लक्षणोक्तौ प्रयोजनम्।
तद्व्यामोहनिवृत्तिः स्याद्व्यामूढमनसामिह ॥ ३ ॥

एतदभ्यधायि भवता यथा—प्रसिद्धानि प्रमाणानि, ततस्तेषां लक्षणोक्तौ असाधारणधर्मकथनविषये प्रयोजनं फलं, किमिति शेषः। तदेतदयुक्तम्। यतो यद्यपि प्रतिप्राणि प्रसिद्धानि प्रमाणानि, अन्यथा तत्कृतनिखिलव्यवहारोच्छेदप्रसङ्गात्, तदुच्छेदे च दृष्टहान्याद्यापत्तेः, तथापि केचिद् विततमोहावष्टब्धान्तःकरणास्तत्स्वरूपमनुभवन्तोऽपि न लक्षयन्ति ततस्तानवलोकयतामस्माकं तद्विषये कृपापरीतचेतसां यथावस्थितप्रमाणलक्षणाविर्भावनद्वारेण व्यामोहमेतेषामपसारयाम इति प्रमाणलक्षणाभिधानं प्रति प्रवर्तते चेतः। तदिदं प्रयोजनम्— तद्व्यामोहनिवृत्तिः स्याद्— इति, तस्मिन् प्रमाणलक्षणे व्यामोहो विपरीताभ्युपगमवतां विपर्यासलक्षणस्तीर्थ्यानां प्रमाणाप्रमाणविवेकविकलानाम्, अनध्यवसायात्मकस्तु मुग्धबुद्धीनां लौकिकानाम्, तस्य निवृत्तिरविपरीतलक्षणावगमादपगम इत्यर्थः। सा स्याद् भवेत्। केषामित्याह— व्यामूढं विपरीतग्रहग्रस्तं विचित्ततां गतं मनोऽन्तःकरणं येषां ते तथा तेषाम्। इहेति लोके। तदयं तात्पर्यार्थः — यद्यनादिप्रसिद्धं प्रमाणलक्षणं प्रति केचिदपि न व्यामुह्येयुस्तदा यद् भवद्भिः प्रागुदग्राहि निरर्थकं प्रमाणलक्षणाभिधानमिति, तत् युक्तमेव स्यात्। न चैतदेवम्, तत्र व्यामूढानां दर्शनात्। एतेन

---

तन्मतमनुद्राव्येति। द्रु स्रु द्रु ह्रु ऋच्छ गमॄ सृ पृ गतौ अनुद्रवत्यनुगच्छति तन्मतम्, सिद्धान्ती प्रयुङ्क्ते, हेतौ इति क्त्वाप्रत्यये अनुगमय्येति शब्दार्थः; तन्मतस्य चानुगमनमनुवादमन्तरेण न संभवतीत्यनूद्येति तात्पर्यम्। यद्वा उत्प्राबल्येन द्रावणं—स्फेटनं पूर्वमुद्द्राव्य ततो नञ्योगादि, निराकृत्येत्यर्थः। तीर्थ्यानामिति। यद्यपि सम्यक् संसारसागरोत्तरणोपायभूतत्वात् तीर्थं जिनशासनमेवोच्यते, तथापि तीर्थमिव तीर्थम्, तत्र साधवः तीर्थ्याः, साध्वर्थे यः। एतेनेति। व्यामूढमनसः प्रतिलक्षणाभिधानेन।

**यददायि दूषणं प्रमाणलक्षणमनिश्चितं निश्चितं वा अभिधीयेत इत्यादि तदपि सिद्ध-साध्यतामध्यप्रतिबद्धत्वान्न बाधाविधायि** अस्माकमिति मन्तव्यम् । **व्यामूढमनसोऽपि** प्रति प्रमाणलक्षणप्रकाशने तल्लगतीति चेत्, न, स्वसंवेदनसिद्धस्य **वचनेन प्रकाशनात्**, तस्य व्यामोहापोह एव व्यापारात् । यथा विविक्तभूतलावलोकनेऽपि अध्यक्षाद् यो घटादिवैविक्त्यं न प्रतिपद्यते, कुदर्शनव्यामोहात्, तं प्रत्युच्येत नास्त्यत्र घटः, उपलम्भकारणसमग्रतायामप्यनुपलम्भात् । वैविक्त्यं हि तत्राध्यक्षसिद्धम्, वचनाद् व्यामोहो निवर्त्येत; तथेहापि विद्वद्भिर्द्रष्टव्यम् । निर्णीतं तल्लक्षणमध्यक्षेण, तस्य व्यवसायरूपत्वात्; वचनं पुनर्विपरीतारोपनिराकरणे व्याप्रियत इति स्थितम् । तदेवं प्रमाणलक्षणं सामान्येन प्रतिपाद्य तद्गतकुचोद्यं पर्यहार्याचार्येण ॥ ३ ॥

अधुना तद्विषयामेव संख्याविप्रतिपत्तिं निराचिकीर्षता ये प्रत्यक्षपरोक्षलक्षणे प्रमाणव्यक्ती प्राक् प्रक्रान्ते, तयोरपि लक्षणं प्रति विप्रतिपद्यन्तेऽपरे । अतस्तल्लक्षण-मपि वक्तव्यम्, इति तावत् प्रत्यक्षलक्षणमभिधातुकाम आह–

**अपरोक्षतयार्थस्य ग्राहकं ज्ञानमीदृशम् ।**
**प्रत्यक्षमितरज्ज्ञेयं परोक्षं ग्रहणेक्षया ॥ ४ ॥**

तत्र प्रत्यक्षमिति लक्ष्यनिर्देशः, अपरोक्षतयार्थस्य ग्राहकं ज्ञानमिति लक्षण-निर्देशः परोक्षोऽक्षगोचरातीतः, ततोऽन्योऽपरोक्षस्तद्भावस्तत्ता तया, साक्षात्कृतत-येति यावत् । अर्यत इत्यर्थः, अवगम्यते इति हृदयम् । अर्थ्यत इत्यर्थो वा, दाह-पाकाद्यर्थक्रियार्थिभिरभिलष्यते इति यावत् । तस्य ग्राहकं व्यवसायात्मकतया साक्षात् परिच्छेदकं ज्ञानं तदीदृशमिति, ईदृगेव प्रत्यक्षमिति संटङ्कः । तत्र ज्ञानग्रहणेन यत् सांख्याः प्राहुः– श्रोत्रादिवृत्तिः प्रत्यक्षमिति, तत् तिरस्करोति । श्रोत्रादीनां प्रकृति-विकारतया तद्वृत्तेर्व्यापारलक्षणाया जडतया प्रत्यक्षत्वायोगात्, अर्थपरिच्छित्तिहेतु-तया प्रत्यक्षत्वे आलोकादिजडकारणकलापव्यापारस्यापि प्रत्यक्षतापद्येत, विशेषा-भावादिति । अर्थस्य ग्राहकमित्यस्य ग्रहणेक्षया इति वक्ष्यमाणपदसापेक्षत्वात् ।

---

**सिद्धसाध्यतामध्यप्रतिबद्धत्वादिति** । अयमभिप्रायः—यदि न प्रमाणलक्षणमभि-धीयतेऽस्माभिस्तदा यदुक्तं – प्रमाणलक्षणमनिश्चितं विधानं वाभिधीयेत इत्यादि तत्सम-स्तमपि दूषणमस्माकं लगेदपि, यदा तु स्वतः सतो व्यवसायरूपत्वात् स्वसंवेदनेन निर्णीतस्य च प्रमाणलक्षणस्य व्यामूढान् प्रति प्रकाशः, कस्तदा दोषावकाशः ? एतच्च व्यामूढमनसोऽपि प्रतीत्यादि पूर्वपक्षमुत्थाप्य स्वत एवानिस्पष्टमाचार्योऽभिधास्यति, ततः स्थितमेतत् **न बाधाविधायीति** ॥ ३ ॥

**श्रोत्रादीति** । श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चेति पञ्चमी– इति श्रोत्रादीनी-न्द्रियाणि तेषां वृत्तिर्वर्तनं परिणाम इति यावत् । इन्द्रियाण्यत्र विषयाकारपरिणतानि प्रत्यक्षमिति हि तेषां सिद्धान्तः । **अर्थस्य ग्राहकमित्यादि** । ग्रहणेक्षयेत्यनेन बाह्यार्थापेक्षया

**अमुना बहिरपि येऽर्थकलाकलनविकलं सकलमपि ज्ञानं प्रलपन्ति तान्निरस्यति। स्वांशग्रहणे ह्यन्तःसंवेदनं व्याप्रियते यथा तथा बहिरपि, इतरथा अर्थवज्ज्ञान-संतानान्तराण्यपि विशीर्येरन्, स्वप्नदृष्टान्तेन तदनुमानस्योपप्लवमात्रतापत्तेः, स्व-विज्ञानस्यैव तथा तथा विजृम्भणात्। तथा च प्रमाणप्रमेयप्रतिपाद्यप्रतिपादककार्य-कारणभावादयः प्रलीयेरन्, आत्मव्यतिरेकेणात्मीयपूर्वोत्तरक्षणयोरपि ज्ञानस्य प्रवृत्तिनिरोधापत्तेः। अद्वयविज्ञानतत्त्वसाधनेनानुकूलमाचरसीति चेत्, स्यादेतत्, यदि भवतः प्रमाणपरिदृष्टसकलव्यवहारोच्छेदनकुदर्शनवासनाहिताद्दृष्टाद्वयतत्त्वपरि-कल्पनात् प्रतिकूलं न स्यात्। तन्नार्थविरहेण बहिः प्रमाणभूतज्ञानोल्लासोऽस्ति, निर्हेतु-कत्वप्रसङ्गादिति। ग्राहकमिति च निर्णायकं द्रष्टव्यम्, निर्णयाभावेऽर्थग्रहणायोगात्। तेन यत् ताथागतैः प्रत्यपादि —**

**प्रत्यक्षं कल्पनापोढमभ्रान्तम् [न्या० बि० ४] इति**

**तदपास्तं भवति, तस्य युक्तिरिक्तत्वात्। तथा हि— ते निर्विकल्पकत्वेऽध्यक्षस्यायुक्तीः खेटयन्ति— किलेदमर्थसामर्थ्येनोदीयते, सन्निहितार्थक्रियासमर्थार्थग्राहकत्वात्। न चार्थे ध्वनयः सन्ति, तद्धेतुविलक्षणकारणान्तरजन्यत्वात्, ततश्चासावुपनिपत्य स्वगोच-रसंवेदनमुत्थापयन् स्वाकारमनुकारयति। तन्न तद्ग्राहिणि विज्ञाने शब्दसंश्लेषो युक्तः।**

यद् ग्राहकं तत्प्रत्यक्षमिति दर्शयति। न चार्थस्य ग्राहकमित्येतावतैवैतत् सिद्धमिति वाच्यम्, यत आत्मस्वरूपस्यार्थस्य ग्राहकमित्येतावतार्थस्य ग्राहकं भवत्येव। न चैवं केवलस्वांश-ग्राहिणः स्वसंवेदनस्य प्रत्यक्षाव्यवच्छेदः, बहिरर्थनिराकरणपरान् योगाचारादीनधिकृत्यैव ग्रहणेक्षेत्येति वक्ष्यमाणपदस्यायोजनात्। **बहिरपीति**। न केवलमन्तर्मुखाकारेण ज्ञानमर्थ-ग्रहणशून्यम्, चिद्रूपस्यैव तथा प्रतिभासनात्, अपि तु बहिर्मुखाकारेणापि। **ये इति**। योगा-चारादयः। **इतरथेत्यादि**। सतानो ज्ञानप्रवाहः, तस्मात् विवक्षितादन्ये संतानान्तराणि। **तदनुमानस्य** संतानान्तरसाधकानुमानस्य, तथा हि— विवक्षितदेवदत्तादेरन्यत्र यज्ञदत्तादौ व्यापारव्याहारौ बुद्धिपूर्वकौ, व्यापारव्याहारत्वात्, संप्रतिपन्नव्यापारव्याहारवद्, इति संता-नान्तरसाधकानुमानम्। तस्मिन् व्यापारव्याहारयोर्ज्ञानकार्यत्वेन प्रतिबन्धनिश्चयात्। एतस्य चानुमानस्य स्वप्नदृष्टान्तेनोपप्लवो भ्रान्तत्वम्। तथा हि— यथा सर्वे प्रत्यया निरालम्बमानाः, प्रत्ययत्वात्, स्वप्नप्रत्ययवदिति भवदभिप्रायेण बहिरर्थसाधनस्य निरालम्बनतया बाह्यार्थाभावः, तथा संतानान्तरसाधनस्यापि निरालम्बनतया संतानान्तराभावः। **व्यवहारेति**। व्यवहारोऽ-बलाबालगोपालहालिकादिप्रसिद्धः। न चायं भ्रान्तः, क्रियाविरोधप्रसङ्गात्। तथा हि-भ्रमाद् बहु-लामोदमोदकादनमिव सौगतानामुपलशकलभक्षणं सुगतपदद्वयाराधनवद्वा खरोष्ट्रदासीपदपर्यु-पास्तिश्च प्रसजति; न चैतद् युगान्तेऽपि दृश्यते, तन्नायं भ्रान्तः। **तद्धेत्विति**। तस्य घटादेर-र्थस्य ये हेतवो मृदादयस्तेभ्योऽन्यानि यानि ताल्वादीनि कारणानि तज्जन्यत्वाद् असावित्यर्थः। **उपनिपत्येति**। निकटीभूय। **स्वाकारम्** अर्थाकारम्। **तद्ग्राहिणि** अर्थग्राहिणि।

किं च यद्युत्पादकार्थोपयोगेऽपि तं तावन्न गृह्णीयात्, संवेदनमपि तु स्मरणसंपादितं तदभिधायकध्वनिसंयोजनं प्रतीक्ष्यमाणं तावदासीत, तर्हि दत्तो जलाञ्जलिरर्थग्रहणस्य। तथा हि– तमर्थमपश्यंस्तस्मिन् गृहीतसंकेतं तदभिधायकं ध्वनिं नानुस्मरति, उपायाभावाद्, अननुस्मरंश्च पुरोवर्तिन्यर्थे न योजयति, स्मृत्युपस्थापनव्यतिरेकेण तद्योजनाशक्तेः, अयोजयंश्च भवदभिप्रायेण न पश्यतीति धान्ध्यादान्ध्यमापद्येत। यदि चेन्द्रियजमपि ज्ञानं विकल्पकलुषितमिष्येत, तदा तदपि मनोराज्यादिविकल्पवद् विकल्पान्तराविर्भावे सति निवर्तेत; नचैतदस्ति, संनिहितगोपिण्डगोचरस्य चक्षुर्जसंवेदनस्याश्वादिविषयविकल्पोदयेप्यनिवर्तनात्, संहृतसकलविकल्पस्यापि च परिस्फुटसंनिहितार्थविषयदर्शनसिद्धेः। तन्नाक्षजं ज्ञानं शब्दसंपर्कमनुभवति। अत्र प्रतिविधीयते– यत्तावदुक्तम्, अशब्दकार्थसामर्थ्योद्भवत्वाद् ध्वनिरहितमध्यक्षमिति, तदयुक्तम्, न हि शब्दासंपृक्तार्थजमित्येतावतैवाभिलापविनाकृतमिति वक्तुं शक्यम्, अन्यथा जडार्थजनितमिति जडमपि तत् स्यात्। अथ बोधरूपमनस्कारसाहित्याद् न जडमिति ब्रूषे, तथा सत्यभिलापसंसृष्टमनस्कारसंनियोगात् साभिलापमपि स्यात्। किं च विविक्ताः परमाणवः स्वाकारार्पणद्वारेण स्वगोचरं ज्ञानमुत्पादयन्तः कथमसन्तमात्मनि स्वावयवव्यापिनं कालान्तरसंचरिष्णुमाकारं तत्र प्रथयन्ति। विभ्रमादिति चेन्न, इदानीमर्थे यदस्ति तदेव प्रतिभाति, तत्रासतोऽपि स्थूराकारस्य प्रतिभासनात्। तथा शब्दोऽपि यद्यविद्यमानोऽर्थे तद्ग्राहिणि ज्ञाने प्रतिभासेत, किं क्षूयेत? यच्चोक्तं–स्मरणजनितशब्दसंयोजनं प्रतीक्ष्यमाणमर्थोपयोगेऽपि यद्यासीतेत्यादि यावदान्ध्यमापद्येत तत् तावकपक्षेऽ-

तमिति अर्थम्। धान्ध्यादिति। धन्ध्यो जडः तस्य भावो धान्ध्य जाड्यम्। विनिश्चयटीकायाम्– धन्ध्यो जड इति। क्वचित् ध्यान्ध्यादिति पाठस्तदेवं व्याख्या– धियो बुद्धेरान्ध्यं ध्यान्ध्यं जाड्यम्, परं नायं पौराणिकः। संहृतेत्यादि। संहृतविकल्पावस्थायां सनिहितार्थविषयविशददर्शनाभिधानेनेन्द्रियजबोधस्य विकल्परूपतां निरस्यति, तथा हि– इन्द्रियजो घटादिबोधो विकल्परूपो न भवति, संहृतसकलविकल्पस्यापि पुंसो जायमानत्वात्, यः पुनर्विकल्परूपो नासौ सहृतसकलविकल्पस्य जायते, यथा मनोराज्यादिविकल्पः, न चायं संहृतसकलविकल्पस्य न जायते, तस्माद् विकल्परूपो न भवतीत्यत्रानुमानम्। विकल्परूपताभ्युपगमे संहृतसकलविकल्पस्य न प्रादुःष्यादिति बाधकम्। तत्रेति ज्ञाने। तत्रासतोऽपीति। परमाणुलक्षणेऽर्थेऽविद्यमानस्यापि प्रतिभासनात्, ज्ञाने इति शेषः। तावकपक्षेऽपीति। अयमत्राभिप्रायः—

[1]यश्चोभयोः समो दोषः परिहारोऽपि वा समः।
नैकः पर्यनुयोज्यः स्यात् तादृगर्थविचारणे ॥ १ ॥ इति। (श्लो० वा०)

१ मुद्रितपुस्तके "तस्माद्यत्रोभयोर्दोषः", "पर्यनुयोक्तव्यः" इति पठ्यते।

पि समानम् । तथा हि– स्वलक्षणविषयेन्द्रियजनिर्विकल्पकज्ञानसद्भावेऽपि न ताव-दिदंतयानिदंतया वार्थव्यवस्थितिः, यावद्विधिप्रतिषेधद्वारेण विकल्पयुगलकं पाश्चात्यं नोदयते, यत्रैवांशे विकल्पं जनयति, तत्रैवास्य प्रमाणता– इति वचनात् । निर्विकल्पकस्य सतोऽपि व्यवहारं प्रत्यसत्कल्पत्वात् । स च विकल्पः संकेतकाल-भावितमभिलापसामान्यमनुस्मरत एवोत्पत्तुमर्हति, अभिलापसामान्यस्मरणबीजं च कुतः प्रबुध्येत ? तादृशदर्शनादिति चेत्, ननु तदपि दर्शनं निर्विकल्पकत्वादर्थं नातिशेते, तत्कथं सामान्यविषयविकल्पबीजं प्रबोधयेत् ? अर्थः पुनः सामान्य-व्यवसायात्मिकां बुद्धिं न जनयेदिति भवतां कदाग्रहः । तदर्थवत् तद्विषयं दर्शनं व्यवसायशून्यत्वात् नाभिलापसामान्यगोचरस्मरणबीजं प्रबोधयति, तदप्रबुद्धं न स्मरणं जनयति, अजातं स्मरणं न शब्दं योजयति, अयोजितः शब्दो नार्थं निश्चा-ययति, अनिश्चितोऽर्थो न व्यवहारमवतरति, अनवतीर्णो नादृष्टाद्विशिष्यते, अवि-शिष्टः प्रमातुरान्ध्यं लक्षयतीति । तस्माद्यथाकथंचिन्निर्णयाभावात् स्वयमप्रतीतमपि निर्विकल्पकदर्शनं वासनाप्रबोधद्वारेण विकल्पमुत्थाप्यात्मव्यापारमभिलापयति कति-चिदंशविषयम्, तथार्थोऽपि यदि चक्षुरादिसामग्र्यन्तःपातित्वेनाप्रतीत एव स्वयम्, तथास्वभावत्वात् । संकेतकालभाविताभिलापसामान्यविषयात्मसंस्कारप्रबोधद्वारेणा-त्मविषयमभिलापसंसृष्टं संवेदनमुल्लासयेत् नात्यन्तमयुक्तं पश्यामः । न चायं सविकल्पको बोधो मनोराज्यादिविकल्पकल्पः । चक्षुरादिसामग्रीसंपाद्यत्वात् । इतरस्य तु मनोमात्रप्रभवत्वात् । अतः कथं तद्वद्विकल्पान्तराविर्भावे निवर्तेत ? मानसविकल्प-स्यैव विकल्पान्तरेण निवर्तनात्, अस्य तु कारणसामर्थ्येन बलात् प्रवृत्तेः । एतेन संहृतसकलविकल्पावस्थायां नैष प्रादुःष्यादित्येतदपि प्रतिक्षिप्तम्, अस्य प्रमातु-रिच्छया संहर्तुमशक्यत्वात्, मानसविकल्पसंहरण एव तत्सामर्थ्योपपत्तेरिति । एतच्च शब्दसंपृक्तप्रत्यक्षपक्षादपि एकान्तनिर्विकल्पकप्रत्यक्षपक्षस्य पापीयस्तां दर्शयन्नि-

**नोदयते इति** । अय वयेत्यादिदण्डकधातुः, नोदयतीति पाठे तु अट पट इट किट कट इ गतौ इत्यस्य प्रयोगः । **स्मरणबीजमिति** । स्मृतेः कारणत्वाद् बीजमिव बीजं संस्कारः । **तस्मात् यथा कथंचिदिति** । तस्मादिति हेतौ पञ्चमी, यथेति दृष्टान्तो-पदर्शनार्थः; कथंचित् केनचित् प्रकारेणेति । **अयमिति** । इन्द्रियजः । **विकल्पकल्पः** विकल्पसदृशः, कल्पशब्दस्य उपमार्थत्वात् । यदाह—

सामर्थ्यवर्णनायां च छेदने करणे तथा ।
औपम्ये चाधिवासे च कल्पशब्दं विदुर्बुधाः ॥ १ ॥

**चक्षुरादीति** । आदिशब्दाद् रूपावलोकमनस्कारादयो गृह्यन्ते । **इतरस्येति** । मनोराज्यादिविकल्पस्य । **तद्वत्** मनोराज्यादिविकल्पवत् । **एष** इन्द्रियजो विकल्पः । **पापीयस्तामिति** । पापं पातकं तद्योगात् पक्षोऽपि पापः, । ततोऽयमनयोरतिशयेन पापः,

रस्माभिरुदग्राहि । परमार्थतः पुनः प्रत्यक्षे साक्षाच्छब्दोल्लेखो नेष्यते, विशदव्यव सायेनार्थसाक्षात्करणचतुरत्वात्तस्य । केवलं तदपि संनिहितं परिस्फुटं स्वावयवव्यापिनं कालान्तरसंचरिष्णुं स्थगितक्षणविवर्तं अलक्षितपरमाणुपारिमाण्डल्यं पदार्थान्तरैः सह समानासमानाकारं स्वपरमाणूनां सामान्याकारं स्तम्भादिकं पदार्थ गोचरयतीति सविकल्पमित्युच्यते, परपरिकल्पितक्षणक्षयिविविक्तपरमाणुलक्षणस्वलक्षणग्रहणप्रवणनिर्विकल्पप्रत्यक्षप्रतिषेधार्थं कथंचिदभिलापसंसर्गयोग्यगोचरतादर्शनार्थं वा । एवं च प्रत्यक्षगोचरीकृतेऽर्थे संज्ञासंज्ञिसंबन्धग्रहणादयस्तद्विषयाः शाब्दव्यवहाराः सर्व एव निरुपचरिता घटन्ते इत्युक्तं भवति । यदि पुनः शब्दसंसर्गयोग्यप्रतिभासमध्यक्षं न स्यात्, ततः को दोषः इति चेद्, विकल्पानुत्थानेन सविकल्पव्यवहारोच्छेदप्रसङ्गः । तथा हि– निर्व्यवसायं दर्शनमित्यतः पाटवोपेतमपि स्मृतिबीजाधानं तदुत्तरकालभावि वा तादृशार्थदर्शनं तत्प्रबोधनमभ्यासवासनापाटवेऽपि न विधातुमलम्, यतः सामान्यविकल्पोत्पत्त्या व्यवहारः प्रवर्तेत, क्षणिकत्वादिषु सकलकालं निर्विकल्पकाध्यक्षदृष्टतयाभ्युपगतेष्वपि तददर्शनात् । तस्मात् यत्र कुत्रचिदर्थांशे पाश्चात्यव्यवहारप्रवृत्तिस्तत्र प्राचीनं संवेदनं निर्णायकमभ्युपगन्तव्यम्, अन्यथा क्षणिकत्वाद्यंशवत् सर्वांशेषु व्यवहारः प्रलीयेत । तन्न कदाचन कल्पनापोढत्वं प्रत्यक्षस्य प्रमातुरपि प्रतीतिगोचरचारितामनुभवति । अप्रतीतं चास्तीति श्रद्धातुं दुःशकम्, अतिप्रसङ्गादित्यलक्षणम् । अभ्रान्तत्वमपि न जाघटीति, भवदभिप्रायेण स्थिरस्थूलार्थग्राहिणः संवेदनस्य विपर्यस्तरूपत्वात्, तद्विपरीतस्य तु स्वप्नकालेऽप्यप्रकाशमानत्वात् । तद्यदि यथावस्थितार्थग्राहित्वमभ्रान्तत्वम्, तन्न संभवत्येव, विविक्तक्षणक्षयिपरमाणूनां कदाचिदप्यप्रतिभासात्, तेषां च पारमार्थिकत्वात् । अथ व्यावहारिकाभिप्रायेण यदिदं घटादिकं स्वलक्षणमर्थक्रियाक्षमम्, तत्र यन्न भ्राम्यति तदभ्रान्तमित्यभिप्रेतम्, तर्हि कल्पनापोढपदमुत्सारणीयम्, इदानी-

गुणाङ्गाद्वेष्ठेयसू ( सिद्ध० ७-३-९ ) इतीयम् । **उदग्राहीति** । उपन्यस्तम्, उत्पूर्व इनन्तो ग्रहिरुपन्यासे वर्तते । यदजयः—

उद्ग्राहितमुपन्यस्ते बद्धाभ्याहितयोरपि --इति ।

**समानासमानाकारमिति** । सजातीयैः सह समानाकारं विजातीयैः पुनरसमानाकारम् । **संबधग्रहणादय इति** । आदिग्रहणाद् विशेषणविशेष्यभावग्रहः । **तथाहीत्यादि**। अभ्यासवासनापाटवेऽपि अभ्यासाद्वासना अभ्यासवासना। वासनेति पूर्वज्ञानजनितामुत्तरज्ञाने शक्तिमाहुस्तद्विदः । तस्याः पाटवं तस्मिन्नपि सति, **अलम्** समर्थम्, निर्व्यवसायेति च विशेषणद्वारेण हेतुरुक्तः, निर्विकल्पत्वादाद्योत्तरदर्शने कर्तॄणीति संस्कारतद्बोधन यथाक्रमं कर्तुं न पारयत इत्युक्तं भवति। **यत इति**। स्मृतिबीजाधानतत्प्रतिबोधनाभ्याम् । **तददर्शनादिति**। व्यवहारादर्शनात् ।

मनेन सहावस्थानाभावात् । व्यवहारावतारिणो घटादिस्वलक्षणस्य निर्णयेनैव ग्रहणात्, अन्यथा व्यवहाराप्रवृत्तेः, दृष्टस्याप्यदृष्टानतिशयनात् । तस्मात् व्यवसायात्मकमध्यक्षमित्येतदेव चार्विति स्थितम्॥ अपरोक्षतया–इत्यनेन तु परोक्षलक्षणसंकीर्णतामध्यक्षस्य परिहरति, तस्य साक्षात्कारितया अर्थग्रहणरूपत्वादिति । ईदृशम्–इत्यमुना तु पूर्वोक्तन्यायात् सावधारणेन विशेषणकदम्बकसचिवज्ञानोपप्रदर्शनात् परपरिकल्पितलक्षणयुक्तस्य प्रत्यक्षतां प्रतिक्षिपति । एवं च यदाहुः इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्, तथा, सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम् इत्यादि, तदयुक्तमित्युक्तं भवति, अपूर्वप्रादुर्भावस्य प्रमाणबाधितत्वात्, अत्यन्तासतां शशविषाणादीनामप्युत्पत्तिप्रसङ्गात् । तस्मादिदमात्मरूपतया विद्यमानमेव विशेषकृद्धेतुकलापसंनिधानात् साक्षादर्थग्रहणपरिणामरूपतया विवर्तेत, तथा चोत्पन्नजन्मादिविशेषणं न संभवेत् । अथैवंविधार्थसूचकमेवैतद्–इत्याचक्षीथाः, तथा सत्यविगानमेवेत्यास्तां तावत्। अधुना परोक्षलक्षणं दर्शयति-इतरदित्यादि । अपरोक्षतयार्थस्य ग्राहकं ज्ञानं प्रत्यक्षमित्युक्तम्, तस्मादितरदसाक्षादर्थग्राहकं ज्ञानं परोक्षमिति ज्ञेयमवगन्तव्यम्। एतदपि स्वसंवेदनापेक्षया प्रत्यक्षमेव, बहिरर्थापेक्षया तु परोक्षव्यपदेशमश्नुत इति दर्शयन्नाह–ग्रहणेक्षया इति, इह ग्रहणं प्रक्रमाद् बहिः प्रवर्तनमुच्यते, अन्यथा विशेषणवैयर्थ्यं स्यात्, तस्येक्षा अपेक्षा तया, बहिःप्रवृत्तिपर्यालोचनयेति यावत् । तदयमर्थः–यद्यपि स्वयं प्रत्यक्षम्, तथापि लिङ्गशब्दादिद्वारेण बहिर्विषयग्रहणे साक्षात्कारितया व्याप्रियते इति परोक्षमित्युच्यते । एतच्च बुभुत्सितार्थान्यथानुपपन्नार्थान्तरप्रतीतिवशादुभयधर्मकमिति । सामान्यलक्षणसद्भावादेकाकारमपि विप्रतिपत्तिनिराकरणार्थं द्विधा भिद्यते । तद्यथा अनुमानं शाब्दं चेति । यतोऽद्यापि शब्दस्यार्थान्यथानुपपन्नत्वमेव परे न प्रतिपद्यन्ते, न चापृथक्कृतस्य तद्विविक्तं वक्तुं शक्यम् अतो भेदेनोपन्यासः ॥४॥

अन्यथेत्यादि । निर्णयेन ग्रहणाभावे व्यवहाराप्रवृत्तेः, दृष्टस्यापि क्षणिकस्वलक्षणस्य अदृष्टादनतिशायन अविशेषः अदृष्टादनतिशायनं तस्मात् । घञ्युपसर्गस्य बहुलम् ( सिद्ध० ३–२–८६ ) इति बहुलग्रहणात् क्वचिदुत्तरपदस्य वा दीर्घत्वेन नरकनारकादिवदतिशयनमतिशायनं वेति संभवति ॥ इन्द्रियार्थसंनिकर्षेत्यादि । अत्र सूत्रे यत इत्यध्याहार्यम्, ततोऽयमर्थः––इन्द्रियार्थसंनिकर्षोत्पन्नत्वादिविशेषणं ज्ञानं यत इन्द्रियार्थसंनिकर्षादेर्भवति तत्प्रत्यक्षम्; ज्ञानं तु प्रत्यक्षप्रमाणफलम्, हानोपादानादिबुद्ध्यपेक्षया तु तदपि ज्ञानं प्रमाणमेव । अव्यपदेश्यं व्यवसायात्मकमिति पदद्वयेन निर्विकल्पसविकल्पकभेदेन प्रत्यक्षस्य द्वैविध्यमाह, शेषाणि तु ज्ञानविशेषणानि । सत्संप्रयोगेत्यादि । सता विद्यमानेन वस्तुना इन्द्रियाणां संप्रयोगे संबन्धे सति पुरुषस्य यो ज्ञानोत्पादस्तत्प्रत्यक्षम् । आदिशब्दात्

तत्र तावदनुमानलक्षणमभिधित्सुराह —

**साध्याविनाभुनो लिङ्गात्साध्यनिश्चायकं स्मृतम् ।**
**अनुमानं तदभ्रान्तं प्रमाणत्वात्समक्षवत् ॥ ५ ॥**

साध्याविनेत्यादि । इहाप्यनुमानमिति लक्ष्यनिर्देशः, तस्य प्रसिद्धतया अनूद्यत्वात् । साध्याविनाभुनो लिङ्गात् साध्यनिश्चायकमिति लक्षणनिर्देशः, तस्याप्रसिद्धतया विधेयत्वादिति । अत्राप्यनुमानशब्दस्य कर्त्रादिकारकव्युत्पत्तिक्रमेणार्थकथनं प्रमाणशब्दवद् द्रष्टव्यम् । ततश्चेहापि लिङ्गग्रहणसाध्याविनाभावित्वलक्षणलिङ्गसम्बन्धस्मरणकालात् अनु पश्चान्मीयते परिच्छिद्यतेऽर्थोऽनुमेयपावकादिर्येन ज्ञानेन तदनुमानमिति । तत् किंभूतमित्याह—साध्यनिश्चायकमिति । साधनमर्हति साधयितुं वा शक्य इति साध्योऽनुमेय इत्यर्थः, तस्य निश्चायकं तत्स्वरूपनिर्णायकमिति यावत् । तत्कुत इत्याह—लिङ्गात्, लिङ्ग्यते गम्यतेऽर्थोऽनेनेति लिङ्गं हेतुः तस्मात् । किंभूतादित्याह साध्याविनाभुन इति । विना भवतीति विनाभु, ततोऽन्यदविनाभु, साध्येनाविनाभु साध्याविनाभु, साध्यं विमुच्य यन्न भवतीत्यर्थः, तस्मात् साध्यनिश्चायकं ज्ञानं तदनुमानं स्मृतम् अभिप्रेतं नीतिविद्भिरिति संबन्धः । तत्र लिङ्गात् साध्यनिश्चायकमित्यनेनानुमानस्य प्रत्यक्षशाब्दलक्षणसंकीर्णतां वारयति । साध्याविनाभुन इत्यनेन परप्रणीतलिङ्गलक्षणव्युदासमाचष्टे । ततश्च यत्परे प्राचुः—पक्षधर्मत्वान्वयव्यतिरेकलक्षणरूपत्रयोपलक्षितानि त्रीण्येव लिङ्गानि अनुपलब्धिः स्वभावः कार्यं चेति । तदुक्तम्—

अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तितासति ।
निश्चितानुपलम्भात्मकार्याख्या हेतवस्त्रयः ॥ इति ।

साक्षात्कारिप्रमासाधनं प्रत्यक्षमित्यादि गृह्यते ॥ ४ ॥

**अनूद्यत्वादिति** । ननु वदेरनुपूर्वस्य नाम्नो वदः क्यप् च ( सि० है० ५-१-३५ ) इति क्यप्प्रत्ययो न प्राप्नोति, अनुपसर्गादित्यधिकारानुवृत्तेः, ततो व्यञ्जनान्तत्वाद् घ्यणि अनुवाद्यत्वादित्येव स्यात् । सत्यम्, अनुवदनमनूत्, संपदादित्वात् भावे क्विप्, ततोऽनूदि अनुवादविषये साधु इति साध्वर्थे येऽनूद्यत्वादिति । **पक्षधर्मान्वयेत्यादि** । परे बौद्धाः । **तदुक्तमिति** । दिग्नागेनेति शेषः । **अनुमेयेत्यादि** । अनुमेयः पक्षः, तत्र सद्भावः प्रत्यक्षतोऽनुमानतो वा हेतोर्दर्शनम् ; तत्र प्रत्यक्षतः कस्मिंश्चित् प्रदेशे धूमस्य, अनुमानतः शब्दे कृतकत्वस्य । तथा **तत्तुल्ये** साध्यसद्भावाद् अनुमेयसमे सपक्षे इत्यर्थः, असति विपक्षे नास्तिता निश्चिता तृतीयं रूपम् । निश्चित इति लिङ्गविपरिणामेन पूर्वयोरपि रूपयोर्योज्यम् । यद्विनिश्चये— अन्ते वचनान्निश्चितत्वं त्रिष्वपि रूपेषु द्रष्टव्यम् इति, एतल्लक्षणा अनुपलब्धिस्वभावकार्याख्यास्त्रयो हेतवः । यथा क्वचिद्देशे न घटः, उपलब्धिलक्षणप्राप्तस्यानुपलब्धेः ।

**तथान्ये अस्येदं कार्यं कारणं संयोगि समवायि विरोधि चेति लैङ्गिकम्-इति, तथा, पूर्ववत् शेषवत् सामान्यतोदृष्टमित्यादि। तद्बालप्रलपितप्रायमित्यवगन्तव्यम्, सर्वत्र साध्याविनाभावित्वस्यैव गमकत्वात् तद्रहितस्य तु त्रैलक्षण्यलक्षितस्याप्यगमकत्वात्, इतरथा तत्पुत्रत्वादीनामपि गमकत्वप्रसङ्गात्, नियमवत्। त्रैलक्षण्यं लक्षणं न यत्किंचित्, तेनायमप्रसङ्ग इति चेन्न, नियमेन साध्याविनाभावित्वस्यैवोद्दीपनात्, तच्चेदस्ति किं त्रैलक्षण्यापेक्षया, तस्यैव गमकत्वात्। तथा हि-जलचन्द्रान्नभश्चन्द्रम्, कृत्तिकोदयाच्छकटोदयम्। पुष्पितैकचूतात्पुष्पिताशेषचूतान्, चन्द्रोदयात्कुमुदाकरप्रबोधम्, वृक्षाच्छायामित्यादि पक्षधर्मत्वविरहेऽप्यनुमिमीमहे। कालादिकस्तत्र धर्मी समस्त्येव, तत्र पक्षधर्मता लिङ्गस्य गृह्यते इति चेन्न, अतिप्रसङ्गात्। एवं**

---

वृक्षोऽयम्, शिशपात्वात्। अग्निरत्र, धूमात्। **अन्य** इति वैशेषिकाः। **आस्पदम् कार्यं** कारणं संयोगि समवायि विरोधि चेति। **लैङ्गिकमिति**। लिङ्गाज्जातं लैङ्गिकम्, लिङ्गदर्शनाद् यदव्यभिचारित्वादिविशेषण ज्ञानं तद् यतः परामर्शज्ञानोपलक्षितात् कारकसमूहाद् भवति तल्लैङ्गिकमिति यावत्। तथा हि-कार्यं कारणपूर्वकत्वेनोपलम्भादुपलभ्यमानं कारणस्य गमकम्। यथा-विशिष्टनदीपूरोपलम्भादुपरि वृष्टो मेघ इति। तथा हि-प्रचुरतरफलफेनपर्णकाष्ठादिवहनविशिष्टस्य नदीपूरस्य वृष्टिकार्यत्वेन पूर्वमुपलम्भात् तदुपलम्भे सति युक्तमनुमानम् अयं नदीपूरो वृष्टिकार्यः, विशिष्टनदीपूरत्वात्, पूर्वोपलब्धविशिष्टनदीपूरवत्, पूर उभयतटव्यापकोदकसंयोगः। कारणमपि कार्यजनकत्वेन पूर्वमुपलब्धमुपलभ्यमानं कार्यस्य लिङ्गम्। यथा विशिष्टमेघोन्नतिर्वर्षकर्मण इति। अथ कारणस्यावश्यं कार्यजनकत्वेनानुपलम्भात्, कार्याणां चानियतात् कारणादुत्पत्तेर्व्यभिचारः। तथा हि-मेघोन्नतिसद्भावेऽप्येकदा वृष्टिर्न दृष्टा, कार्यं चानियतात् कारणादुत्पद्यमानं दृष्टम्। यथा वृश्चिकाद् वृश्चिको जायते गोमयात् सर्वाच्चेति। तत्कथं कार्यात् कारणविशेषप्रतिपत्तिः कारणाच्च कार्यविशेषस्येति? नैतदेवम्, कारणविशेषस्य कार्यविशेषगमकत्वम्, कार्यविशेषस्य तु कारणविशेषगमकत्वमित्यभ्युपगमात्। यस्तु विद्यमानमपि विशेषं नावबुध्यते, तत्र तस्यापराधो नानुमानस्येति। तथा धूमोऽग्नेः संयोगी। अथ संयोगस्योभयनिष्ठत्वाविशेषे कथमेक नियमेन हेतुरपरं च साध्यमिति व्यवस्था? सत्यमिदम, अविनाभावेऽपि समानमुत्पश्यामः। तथा हि-अविनाभावस्योभयनिष्ठत्वात् कथमेषा व्यवस्थेति। अथ यस्योपलम्भादनुमेये प्रवृत्तिस्तदेव साधनं नान्यदिति चेत्, संयोगित्वेऽपि समानमेतत्। समवायी चोष्णस्पर्शो वारिस्थ तेजो गमयतीति। विरोधी च यथा-अहिविस्फूर्जनविशिष्टो नकुलादेर्लिङ्गम्, वह्निर्वा शीताभावस्येति। नैयायिकाश्चाहुः-पूर्ववच्छेषवत्सामान्यतोऽदृष्टमित्यनेन सूत्रावयवेन तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोऽदृष्ट चेति सकलं सूत्र लक्षयन्ति। तत्पूर्वकं प्रत्यक्षपूर्वकं त्रिविधमिति; अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति। अथवा सूत्रावयवेनैव प्रकारान्तरेण त्रिविधं पदं व्याचष्टे, पूर्ववत् शेषवत् सामान्यतोऽदृष्टमिति। पूर्वं साध्यं तद्व्याप्त्या यस्यास्ति तत्पूर्ववत्।

हि शब्दस्यानित्यत्वे साध्ये काककार्ष्ण्यादेरपि गमकत्वप्रसक्तेः; तत्रापि लोकादेर्धर्मिणः कल्पयितुं शक्यत्वात्। तथा अन्वयविकलेऽपि अनित्यः शब्दः, श्रावणत्वात्, इत्ययं सम्यग्हेतुतया समर्थयितुं शक्य इति। नान्वयोऽपि हेतोर्लक्षणम्। तथा हि-तावकाकृतैनैव सकलं सत्त्वमनित्यतया क्रोडीकृतम्, इति भावधर्मः श्रावणत्वं कथमनित्यतां विहाय विपक्षे वर्तितुमुत्सहेत, तद्विकल्पस्य निःस्वभावतापत्तेः, अनित्यताविनिर्मुक्तस्य सत्त्वस्यासंभवात्। एतेन सात्मकं जीवच्छरीरम्, प्राणादिमत्त्वात्, निरात्मकत्वे तद्विकल्पप्रसङ्गात्, घटादिवद्, इत्ययमपि गमको व्याख्यातः, साध्यार्थान्यथानुपपन्नत्वस्यात्रापि सद्भावात्। पक्षधर्मत्वान्वययोस्त्वलक्षणतया प्रतिपादनात्। तथा कार्यस्वभावानुपलब्धिरूपलिङ्गत्रयनियमोऽपि किल तादात्म्यतदुत्पत्तिलक्षणसंबन्धास्तित्वमेतेष्वेवेति यः क्रियते, सोप्ययुक्तः, प्रकृतसंबन्धद्वयविकलस्यापि रूपादे रसादिगमकत्वदर्शनात्। मा भूत्तस्य तादात्म्यतदुत्पत्तिभ्यां गमकत्वम्, समवायाद्भविष्यति; तथापि नान्यथानुपपन्नत्वमेव हेतोर्लक्षणमिति यदि वैशेषिको मन्येत, सोऽन्यथा निर्लोठनीयः। स हि विकल्पतः पर्यनुयोज्यः, समवायिभ्यः समवायोऽभिन्नो भिन्नो वा। यद्यभिन्नः, समवायिन एव तर्हि, न समवायः; तद्व्यतिरिक्तत्वात्, तत्स्वरूपवत्। भिन्नश्चेत्, स कथं तेषु वर्तेत सामस्त्येन आहोस्विदेकदेशेन। तद्यदि सामस्त्येन, तदयुक्तम्, समवायबहुत्वप्रसङ्गात्, प्रतिसमवायि तस्य परिसमाप्ततावाप्तेः। अथैकदेशेन, तदप्यचारु, सांशताप्रसङ्गेन निरवयवत्वक्षतेः, स्वांशवर्तनेऽपि सामस्त्यैकदेशचोद्यावताराच्च। तत्रापि सामस्त्यपक्षे बहुत्वं तदवस्थमेव। एकदेशपक्षे त्वंशान्तरप्रसङ्गेनानवस्था। तन्न समवायबलाद् गमकतां प्रत्याशा

---

साध्यसजातीयं च शेषः, तद् यस्यास्ति तच्छेषवत्। सामान्यतश्च विपक्षेऽदृष्टम्, चशब्दात् प्रत्यक्षागमाविरुद्ध असत्प्रतिपक्ष चेति। एवं च पञ्चरूपम्, अन्वयव्यतिरेकयोरन्यतररूपाभावे च तत्तद्रूपमनुमानमिति। अथवा पूर्ववन्नाम यत्र कारणेन कार्यमनुमीयते, यथा-मेघोन्नत्या भविष्यति वृष्टिरिति। प्रयोगस्तु-अमी मेघा वृष्टिमन्तः, गम्भीरगर्जितत्वेऽचिरप्रभावत्त्वे च सत्युन्नतत्वात्, ये एवं ते वृष्टिमन्तः, यथा वृष्टिमत्पूर्वमेघाः, तथा चामी, तस्मात्तथा। शेषवन्नाम यत्र कार्येण कारणमनुमीयते, यथा नदीपूरदर्शनाद् वृष्टिः। प्रयोगस्तु उपरिवृष्टिमद्देशसंबन्धिनी नदी, शीघ्रतरस्रोतस्त्वे फलफेनकाष्ठादिवहनत्वे च सति पूर्णत्वात्, तदन्यनदीवत्। सामान्यतोदृष्टं नाम अकार्यकारणभूतेन यत्राविनाभाविना विशेषणेन विशेष्यमाणो धर्मो गम्यते, यथा-बलाकया सलिलमिति। प्रयोगोऽयम्-बलाकाजहद्वृत्तिप्रदेशो जलवान्, बलाकावत्त्वात्, संप्रतिपन्नप्रदेशवदिति। **तत्पुत्रादीनामिति**। स श्यामः, तत्पुत्रत्वात्, परिदृश्यमानपुत्रवदिति। **आदीति**। आदिशब्दात् निरुपाधिसंबन्धबोधसमुत्थसाध्यप्रमासाधनमनुमानमित्यादिग्रहः। आदिशब्दात् पक्वान्येतानि आम्रफलानि, एकशाखाप्रभवत्वात्, उपभुज्यमानाम्रफलवदित्यादिपरिग्रहः।

विधेया, तस्यैव तत्र दुःस्थितत्वात्। एतेन संयोगिनाऽपि गमकता प्रत्युक्ता, समानदूषणत्वात्। विरोधिनोऽपि विरुद्धाभावगमकत्वमन्यथानुपपन्नत्वमेव सूचयति, तदभावे गमकत्वायोगात्। एवं परपरिकल्पितमन्यदपि लिङ्गलक्षणं यद्गमकताङ्गं तदन्यथानुपपन्नत्वं न व्यभिचरति, साध्यं विनाप्युपपद्यमानस्य गमकतावैकल्यादिति, अत्रैव व्यापके लिङ्गलक्षणे अन्तर्भावनीयम्, विपरीतं तु निरसनीयमिति स्थितम्। तदेवमनुमानलक्षणं प्रतिपाद्याधुना यच्छौद्धोदनिशिष्यैर्न्यगादि–यदुत भ्रान्तमनुमानम्, सामान्यप्रतिभासित्वात्। तस्य च बहिः स्वलक्षणे व्यतिरेकाव्यतिरेकविकल्पाभ्यामपाक्रियमाणतया अयोगात्, तद्रूपतया च तेन तस्याध्यवसायाद् अतस्मिंस्तद्ग्रहणस्य च भ्रान्तिलक्षणत्वात्। प्रामाण्यं पुनः प्रणालिकया बहिः स्वलक्षणबलायातत्वादनुमानस्य। तथा हि-नार्थं विना तादात्म्यतदुत्पत्तिरूपसंबन्धप्रतिबद्धलिङ्गसद्भावः न तद्विना तद्विषयं ज्ञानम्, न तज्ज्ञानमन्तरेण प्रागवधारितसंबन्धस्मरणम्, तदस्मरणे नानुमानमिति, अर्थाव्यभिचारित्वाद् भ्रान्तमपि प्रमाणमिति संगीर्यते। तदुक्तम्—

अतस्मिंस्तद्ग्रहो भ्रान्तिरपि संबन्धतः प्रमा। इति।

तदपाकर्तुमाह–तदभ्रान्तमित्यादि। तदनुमानं भ्राम्यति स्वगोचरे विपर्यस्यतीति भ्रान्तम्, ततोऽन्यदभ्रान्तम्, अविपरीतार्थग्राहीति यावत्, इयं च प्रतिज्ञा; प्रमीयते यथावस्थितोऽर्थः परिच्छिद्यतेऽनेनेति प्रमाणम्, तद्भावस्तत्त्वं तस्मात्, अयं तु हेतुः; संगतमक्षाणामिति समक्षम्, तदिव समक्षवदिति दृष्टान्तः तदिदमनुमानस्य भ्रान्ततानिराकारकं संपूर्णावयम्, उपनयनिगमनयोरवयवत्रयप्रतिपादनेनैवाक्षिप्तत्वात् प्रमाणं सूचितम्। प्रयोगस्त्वेवं द्रष्टव्यः–अभ्रान्तमनुमानम्, प्रमाणत्वात्, इह यत् यत् प्रमाणं तत्तदभ्रान्तं यथा समक्षम्, तथा च प्रमाणं भवद्भिरभ्युपगम्यते अनुमानम्, तस्मात्प्रमाणत्वादभ्रान्तमिति प्रतिपद्यन्तामिति। तत्रार्थवादी तावत्समक्ष-

---

**विरोधिन इत्यादि**। विरोधी वह्निः स्वविरुद्धस्य शीतस्य असत्त्वं बोधयति। विरुद्धाभावगमकत्वमित्युपलक्षणम्, विरुद्धसद्भावगमकत्वस्यापि दर्शनात्। अत एव पूर्वमहिर्विस्फूर्जितविशिष्टो नकुलादिलिङ्गमित्युक्तम्, तस्य च सामान्यस्य तद्रूपतया च तेन तस्याध्यवसायादिति, स्वलक्षणरूपतया चानुमानेन सामान्यस्य विकल्पनात्। अतस्मिन् अस्वलक्षणे तद्ग्रहस्य स्वलक्षणतया परिच्छेदस्य भ्रान्तिरपि संबन्धतः प्रमेति। अमुमेवार्थं दृष्टान्तपूर्वकं विनिश्चये धर्मकीर्तिरकीर्तयत्। यथा—

मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ १ ॥
यथा तथा यथार्थत्वेऽप्यनुमानतदाभयोः।
अर्थक्रियानुरोधेन प्रमाणत्वं व्यवस्थितम् ॥ २ ॥ इति ॥ ५ ॥

लक्षणे दृष्टान्ते साध्यविकलतामाविर्भावयितुं न पारयति, स्वयमेव समक्षस्याभ्रान्ततयाभ्युपगमात्। शून्यवादिनः समस्तापलापित्वात् प्रमाणप्रमेयव्यवहारं प्रत्ययोग्यतैवेति न तमधिकृत्य स्वसाधनदोषाः परिहर्तव्याः, स्ववचनबाधितप्रतिज्ञत्वेन तद्वादोत्थानाभावात्। तथा हि-सर्वाभावप्रतिपादकं वचोऽस्ति, नास्ति वा। यद्यस्ति तर्हि प्रतिज्ञाहानिः। अथ नास्ति, सकलभावसिद्धिः, प्रतिषेधकाभावात् ॥ ५ ॥

ज्ञानवादी पुनर्वेद्यवेदकाकारविकलं सकलविकल्पगोचरातीतं निर्विकल्पकं विविक्तपारमार्थिकस्वसंवेदनवेद्यं संवेदनमागूर्यानादिकालालीनवासनाबलप्रभावितं ग्राह्यग्राहकाकारकलुषितं बहिष्प्रथमानं निखिलमपि ज्ञानं विपर्यस्ततया प्रतिजानानः समक्षलक्षणस्य प्रकृतदृष्टान्तस्य साध्यशून्यतामभिदध्यात्, अतस्तन्मतविकुट्टनार्थमाह—

**न प्रत्यक्षमपि भ्रान्तं प्रमाणत्वविनिश्चयात्।**
**भ्रान्तं प्रमाणमित्येतद्विरुद्धं वचनं यतः ॥ ६ ॥**

यद्भवतश्चेतसि विवर्तते, यदुत न केवलमनुमानं भ्रान्तम्, किं तर्हि यद्भवद्भिर्दृष्टान्ततयोपात्तं प्रत्यक्षं तदपि भ्रान्तमेव, सर्वमालम्बने भ्रान्तमिति वचनात्। तदेतन्न, कुत इत्याह- प्रमाणत्वविनिश्चयादिति। प्रमाणभावनिर्णयादित्यर्थः। ननु च प्रमाणतामभ्रान्ततान्यथानुपपन्नां यदि परः प्रतिपद्येत, ततस्तामभ्युपगच्छन् कथं भ्रान्तताविप्रतिपत्तिं विदध्यादिति पार्श्वस्थितवचनावकाशमाशङ्क्य, भ्रान्तताप्रमाणतयोर्विरोधसाधनेन ततः प्रमाणतां व्यावर्त्यानन्यशरणतया प्रतिज्ञाताभ्रान्तताक्रान्तां तां दर्शयन्नाह- भ्रान्तमित्यादि। भ्रान्तं विपर्यस्तं अथ च प्रमाणं ग्राह्यपरिच्छेदहेतुरित्येतद्वचनमेवंविधार्थप्रत्यायको ध्वनिर्विरुद्धं, पूर्वापरव्याहतार्थगर्भकत्वात्। ननु च नैवास्य विरुद्धता, तथा हि- अविदितपरमार्थव्यावहारिकाभिप्रायेण लोकसंवृतिं घटयन्तो वयं दृढतरवासनाप्रबोधसंपादितसत्ताकयोः प्रत्यक्षानुमानयोः प्रमाणतामाचक्ष्महे, तदभिप्रायेण दर्शितार्थप्रापकत्वेन तयोरविसंवादकत्वात्, शिथिलवासनौन्मुख्यनिर्मितजन्मकयोः पुनरप्रमाणताम्, तदाकूतेनैव दर्शितेऽर्थे विप्रलम्भनादिति, भ्रान्ततां पुनस्तत्त्वचिन्तकाभिप्रायेण सकलस्य बहिरुपप्लवमानस्य ग्राह्यग्राहकाकारकालुष्यदूषितस्य प्रतिभासस्य पारमार्थिकाद्वयसंवेदनविपर्यस्तरूपत्वादभिदध्महे, बहिः प्रतिभासस्य तद्ग्राह्यार्थविचाराक्षमतयोपप्लुतरूपत्वात्। तथा हि- अर्थोऽवयविरूपः अवयवरूपो वा स्यात्, गत्यन्तराभावात्। न तावदवयविरूपो

---

आगूर्येति प्रतिज्ञाय। ततो भ्रान्ततायाम्। तां प्रमाणताम्। संवृतिमिति कल्पनाम्। यदाहुः-

अनिरूपिततत्त्वार्था प्रतीतिः संवृतिर्मता।

औन्मुख्यमिति आभिमुख्यम्। तदाकूतेन व्यावहारिकाभिप्रायेण।

विचारं क्षमते, अवयवविरहे अवयवित्वायोगात्, तेषु च तद्वृत्तिविकल्पानुपपत्तेः। तथा हि– तेषु असावेकदेशेन वर्तते, सामस्त्येन वा। न तावदेकदेशेन, तस्य स्वयं निरवयवत्वात्। अवयववृत्तिनिमित्तमंशान्तरकल्पने तद्वृत्तावप्यंशान्तरकल्पनप्रसङ्गः, तथा चानवस्था। नापि सामस्त्येन, प्रत्यवयवं परिसमाप्तरूपतयावयविबहुत्वप्रसङ्गात्। भेदपक्षे दोषोऽयम्, अभेदपक्षे नास्तीति चेत्, न, तत्राप्यवयवमात्रम् अवयविमात्रं वा स्यात्, इतरेतराव्यतिरिक्तत्वात्, इतरेतरस्वरूपवत्। किं च समस्तावयवव्यापिनोऽवयविनोऽभ्युपगमे पटादेरेकदेशरागकम्पदर्शनादिषु सकलरागकम्पदर्शनादीनि दुर्निवाराणि स्युः, एकस्य रागारागादिविरुद्धधर्माध्यासायोगादिति। नाप्यवयवरूपोऽर्थो विचारगोचरचारी, करचरणशिरोग्रीवादीनामवयवानां स्वावयवापेक्षया अवयविरूपतया तद्दूषणेनैवापास्तत्वात्। परमाणूनां निरंशतया अवयवत्वमुपपद्यत इति चेत्, न, तेषामपि दिक्षट्कसंबन्धेन षडंशतापत्तेः, अन्यथावस्थानाभावात्, ततश्चार्थविरहात्तदुन्मुखो ग्राह्याकारोऽलीकः, तदलीकतायां ग्राहकाकारोऽपि नावस्थानमाबध्नाति, ग्राह्याभावे ग्राहकायोगात्, तदपेक्षयैव तत्स्वरूपस्थितिः, ग्राह्यग्राहकाकारविलये च बोधाकारोऽवशिष्यते, तस्य सर्वत्राव्यभिचरितरूपत्वात्, तस्मात् स एव पारमार्थिक इति। अत्र प्रतिविधीयते–यदवादि संवेदनमद्वयं पारमार्थिकम्, ग्राह्यग्राहकाकारप्रवृत्तं पुनरतात्त्विकमिति, तदयुक्तम्, प्रमाणाभावात्। तथा हि– बहिरन्तश्चानेकाकारतया हर्षविषादादिभिः स्थिरस्थूरताद्यनेकधर्मपरिकरितार्थग्रहणपरिणामैश्च विवर्तमानं संवेदनमुपलभ्यते, न पुनर्वेद्यवेदकाकारविविक्तं यादृग् भवद्भिरुपवर्ण्यते ज्ञानं तादृशं कस्यचित् कदाचन प्रतीतिगोचरचारितामनुभवति, अद्वयप्रतिभासस्य स्वप्नदशायामप्यननुभूतेः। न च तत्त्वचिन्तका अपि प्रमाणमन्तरेण स्वाकूतं प्रतिष्ठापयन्तः प्रेक्षावतामवधेयवचना भवन्ति, अन्यथैकमचेतनमव्ययमपि ब्रह्मानेकं चेतनं क्षणभङ्गुरताक्रान्तमविद्यातः प्रथत इति ब्रुवाणोऽनिराकार्यः स्यात्। यदपि बहिरर्थनिराकरणधिया अवयव्यवयवद्वारेण दूषणमदायि, तदपि बहिरन्तः प्रथमानसकलासुमत्प्रतीतप्रतिभासमुद्गरनिर्दलितशरीरतया भक्तमध्यनिष्ठ्यूतदर्शिनः पुरतो विप्रतारणप्रवणकुट्टिनीशपथप्रायमिति न विद्वज्जनमनांसि रञ्जयति, प्रत्यक्षप्रतिभासापह्नवे तन्मूलकत्वात् कुयुक्तिविकल्पानामुत्थानाभावात्। किं च संवेदनस्यापि सितासिताद्यनेकाकारेष्वेकस्य वर्तने भेदाभेदसामस्त्यैकदेशादिचोद्यं समानमेवेति न दूषणम्। अनेकाकारविवर्तस्यालीकत्वान्न तेन सह संवेदनस्य पारमार्थिकस्य भेदाभेदादिचिन्तेति चेत्, ननु एवमितरेतराश्रयं दुरुत्तर-

---

दिक्षट्केत्यादि। षड्दिक्संबन्धान्यथानुपपत्त्या परमाणूनां सावयवतेत्यभिप्रायः। अवधेयवचना आदेयवचसः। ब्रह्म तत्त्वरूपम्। संवेदनस्यापीत्यादि। एकस्येति। चित्रज्ञानस्य, ज्ञाने ह्येकस्मिन्नेव नीलपीतादयो बहव आकाराः प्रतिभान्ति, ततस्तेषु नीलपीताद्याकारेषु कथ-

मालीकते । तथा हि– तदलीकत्वसिद्धावद्वयसंवेदनसिद्धिः, तत्सिद्धौ च तदलीकत्वमिति न्यायात् । अन्यच्च अद्वयमप्येकक्षणवर्ति संवेदनं यथा पूर्वोत्तरक्षणाभ्यां संबन्धमनुभवति, तथा निरंशा अपि यदि परमाणवो दिगंशैः परमाण्वन्तरैर्वा संश्लेषमागच्छेयुः किमयुक्तं स्यात् । न चावयव्यवयवयोरेकान्तव्यतिरेकाव्यतिरेकपक्षे यद्दूषणं तदस्मत्पक्षबाधाकरम्, परस्पराविनिर्लुठितरूपयोर्विवक्षया संदर्शनीयभेदयोस्तयोरभ्युपगमात्, बहिरन्तश्च तथैव प्रकाशमानतया तयोर्निह्नोतुमशक्यत्वात् । एतेन रागारागकम्पाकम्पादिविरोधोद्भावनमपि प्रतिव्यूढम्, प्रमाणप्रसिद्धेऽर्थे विरोधाभावात्, प्रमाणबाधितस्यैव विरुद्धत्वात्, कुयुक्तिविकल्पानां च प्रत्यक्षापह्नवे निर्मूलतया बाधकत्वायोगात्, तदुद्दलितत्वेनोत्थानाभावात्, भिन्नप्रवृत्तिनिमित्तत्वाच्च सर्वधर्माणां तद्विपर्ययसंपाद्यो विरोधो दूरापास्त एव । किं च, स्वयमेव संवेदनं परमार्थसंव्यवहारापेक्षया प्रत्यक्षाप्रत्यक्षसविकल्पकाविकल्पकभ्रान्ताभ्रान्तादिरूपमभ्युपयतो बहिरर्थे विरुद्धधर्माध्यासप्रतिषेधबुद्धिः केवलं जाड्यं सूचयति । तन्न प्रमाणं कथंचिद् भ्रान्तं समस्ति, स्वरूपप्रच्यवप्रसङ्गादिति स्थितम् । ननु च तद्दर्शितार्थालीकतया ज्ञानस्य भ्रान्तता, न स्वरूपेण, न च तदुदयसमये कस्यचिदिदमलीकार्थम्, इदं त्वनलीकार्थमिति विवेकेनावधारणं समस्ति; भ्रान्तताभ्रान्तताभिमतयोस्तदेकरूपतया प्रकाशनात् । यदा च विशददर्शनपथचारिणोऽपि शशधरयुगलादयोऽलीकतामाविशन्तो दृश्यन्ते, तदा सकलसत्यार्थताभिमतप्रतिभासेष्वप्यलीकार्थताशङ्कानिवृत्तेरनाश्वास एव । न च तदर्थप्राप्त्यादिकमारेकानिराकरणकारणं कल्पनीयम्,

---

मेकं ज्ञानं वर्तते इति विचारः प्रवर्तते एव । **तदुद्दलितत्वेनेति** । प्रत्यक्षापह्नवेन कुयुक्तिविकल्पानां निर्दलितत्वादुत्थानाभावः, प्रत्यक्षाभावे हि क्वचित् कस्याप्यदर्शने कथं कुयुक्तिविकल्पानां संभवः ? **भिन्नप्रवृत्तिनिमित्तत्वादिति** । पर्यायरूपतया हि एकत्वपरिणामरूपस्यावयविनः तन्तुभ्यो भेदः, द्रव्यरूपतयाऽभेदः, एवमुत्पादादिधर्माणामपि विरोधाभावो बोद्धव्यः, उत्तरपर्यायस्य ह्युदयः पूर्वपर्यायस्य व्ययः द्रव्यस्य त्वनुयायिनो ध्रौव्यमिति । **परमार्थेत्यादि** । परमार्थसंव्यवहारापेक्षयेति एतद् यथासंभवं योज्यं न यथाक्रमम्, तेन परमार्थापेक्षया संवेदनं प्रत्यक्षम् स्वसंवेदनरूपत्वात्; संव्यवहारापेक्षया त्वप्रत्यक्षम्, अर्थाभावेऽप्यर्थपरिच्छेदात्मकत्वेन लोकैरध्यवसायात्, तथा परमार्थापेक्षया विकल्परहितम्, सर्वविकल्पानां स्वात्मनि निर्विकल्पत्वात्; संव्यवहारापेक्षया तु विकल्पकलुषितम्, असतो बहिरर्थस्य तेन विकल्पनात्, तथा परमार्थापेक्षया अभ्रान्तम्, ज्ञानमात्रस्य वास्तवत्वात्; संव्यवहारापेक्षया च भ्रान्तम्, अविद्यमानबाह्यवस्तुनि बहीरूपतयार्थस्य ग्राहकत्वात् । आदिग्रहणात् परमार्थापेक्षया प्रमाणम् संव्यवहारापेक्षया त्वप्रमाणमित्याद्यपि द्रष्टव्यम् । **बहिरर्थे** बाह्यवस्तुनि भेदाभेदादिविरुद्धधर्माध्यासने कृत्वा हेतुना वा प्रतिषेधबुद्धिः केवलं मन्दतां प्रकटयति । **तदर्थप्राप्त्यादिकमिति** । तस्य प्रतिभासमानस्य जलादेरर्थस्य प्राप्तिः, आदिशब्दात् पानाव-

स्वप्नावस्थायां तत्सद्भावेऽप्यलीकार्थतासिद्धेः। बाधकप्रत्ययोपनिपातात् तस्यासत्यार्थतेति चेत्, न, तस्य स्वगोचरपर्यवसितत्वेन बाधकत्वायोगात्। अन्यथा नीलमाददाना देवदत्तबुद्धिः प्राक्प्रवृत्तपीतबुद्धेर्बाधिकापद्येत, सर्वप्रतिभासस्य बाधकाभावसिद्धेश्च समानता। तस्माद् भ्रान्ताभ्रान्तज्ञानभ्रान्तिरियं भवताम्, विवेकाभावेन सर्वस्यालीकार्थत्वादिति ॥ ६ ॥

अत्राह—

**सकलप्रतिभासस्य भ्रान्तत्वासिद्धितः स्फुटम्।**
**प्रमाणं स्वान्यनिश्चायि द्वयसिद्धौ प्रसिध्यति ॥ ७ ॥**

एवं मन्यते- योऽपि समस्तसंवेदनस्य भ्रान्ततां प्रतिजानीते, तेनापि तत्साधकस्याभ्रान्तताभ्युपगन्तव्या, तदभ्रान्तत्वे तत्प्रतिपादितार्थालीकत्वेन सकलज्ञानाभ्रान्तताप्रसङ्गात्, अन्यथा तदभ्रान्तत्वायोगात्। एवं च तज्जातीयमन्यदप्यभ्रान्तं स्यात्, ततश्च सकलप्रतिभासस्य समस्तसंवेदनस्य भ्रान्तत्वासिद्धितो विपर्यस्तत्वानिष्पत्तेः यत् स्फुटं स्वान्यनिश्चायि सुनिश्चिततया स्वपरप्रकाशकं तत्प्रमाणमिति संबन्धः। तच्च द्वयसिद्धौ स्वरूपार्थलक्षणयुग्मनिष्पत्तौ प्रसिद्ध्यति निष्पद्यते, अन्यथा प्रमेयाभावे प्रमाणाभावात्। तस्मात् प्रमाणमुररीकुर्वाणेनार्थोऽप्यभ्युपगन्तव्य इत्यभिप्राय इति ॥ ७ ॥

तदेवं स्वार्थानुमानलक्षणं प्रतिपाद्य तद्गतां भ्रान्तताविप्रतिपत्तिं च निराकृत्याधुनाप्रतिपादितपरार्थानुमानलक्षण एवाल्पवक्तव्यत्वात् तावच्छाब्दलक्षणमाह—

**दृष्टेष्टाव्याहताद्वाक्यात्परमार्थाभिधायिनः।**
**तत्त्वग्राहितयोत्पन्नं मानं शाब्दं प्रकीर्तितम् ॥८॥**

अत्रापि शाब्दम् इति लक्ष्यम्, अनूद्यत्वात्। दृष्टेष्टाव्याहताद् इत्यादि लक्षणम्, विधेयत्वात्। दृष्टेन प्रमाणालोकितेन इष्टः प्रतिपादयिषितोऽव्याहतो अनिराकृतः सामर्थ्यादर्थो यस्मिन् वाक्ये तत्तथा, प्रमाणनिश्चितार्थाबाधितमिति यावत्, तस्मात्। परमोऽकृत्रिमः पुरुषोपयोगी शक्यानुष्ठानो वार्थो वाच्यस्तमभिधातुं शीलं

गाहनाद्यर्थक्रियापरिग्रहः। **तस्येति**। स्वप्नज्ञानस्य। **तस्य** बाधकप्रत्ययस्य। **समानतेति**। न कश्चित्प्रतिभासो बाध्यो नापि च बाधक। **विवेकाभावेनेति**। विवेको भ्रान्तात् स्वप्नज्ञानादेरभ्रान्तस्य पार्थक्येन व्यवस्थापनम् ॥ ६ ॥

**योऽपीति**। योगाचारादिः। **भ्रान्ततामिति**। सर्वमालम्बने भ्रान्तम् इति वचनात् **तत्साधकस्य** समस्तसंवेदनभ्रान्ततासाधकस्य, निरालम्बनाः सर्वे प्रत्ययाः, प्रत्ययत्वात्, स्वप्नप्रत्ययवत्, इत्यनुमानस्य। **तदभ्रान्तत्वे** निरालम्बनतासाधकानुमानालीकत्वे ॥ ७ ॥

**दृष्टेनेत्यादि**। अयं भिन्नाधिकरणस्त्रिपदो बहुव्रीहिः, यदि वा इष्टोऽव्याहतोऽर्थो यत्र तदिष्टाव्याहतं वाक्यम्, तदनु दृष्टेन प्रमाणनिर्णीतेन इष्टाव्याहतमिति तत्पुरुषः। **परमोऽ-**

यस्य तत् परमार्थाभिधायि, विशिष्टार्थदर्शकमित्यर्थः। ततः तत्त्वग्राहितयोत्पन्नम् प्रकृतवाक्यप्रतिपाद्यार्थादानशीलतया लब्धात्मसत्ताकं यन्मानं तच्छाब्दमिति प्रकीर्तितम् उपवर्णितं पूर्वाचार्यैरिति संबन्धः। तत्र दृष्टेष्टाव्याहताद् इत्यनेन कुतीर्थिकवचसां लौकिकविप्रतारकोक्तीनां च शाब्दतां निरस्यति, प्रमाणबाधितत्वात्। वाक्यात् इत्यमुना तु वाक्यस्यैव नियतार्थदर्शकत्वात् परमार्थाभिधायितेति दर्शयन् पदाच्छाब्दाभावमाह। परमार्थाभिधायिनः इत्यनेन ज्वरहरतक्षकचूडारत्नालंकारोपदेशादिवचनप्रभवज्ञानस्य निष्फलतया प्रामाण्यं निराचष्टे। तत्त्वग्राहितयोत्पन्नम् इत्यमुना त्वेवंभूतादपि वाक्यात् श्रोतृदोषाद् विपरीताद्यर्थग्रहणचतुरतया प्रादुर्भूतस्य शाब्दत्वं वारयति। मानम् इत्यनेन अन्तर्भावितप्रोपसर्गार्थेन शाब्दे परस्याप्रामाण्यबुद्धिं तिरस्कुरुते, तदप्रामाण्ये परार्थानुमानप्रलयप्रसङ्गात्, तस्य वचनरूपत्वात्। अवयवहेतुसूचकत्वेनोपचारतस्तस्य प्रामाण्यं न तत्त्वत इति चेत्, न, अप्रामाण्यस्य सूचकत्वायोगात्। ननु हेतुप्रतिपादने यदि तत् प्रमाणम्, ततो हेतुसमर्थकप्रमाणान्तरप्रतीक्षणं न विशीर्येत, तेनैव निर्णीतस्वरूपत्वात्तस्य प्रमाणसिद्धेः पुनः प्रमाणान्तरवैयर्थ्यात्। नैतदस्ति, भवत्परिकल्पिताध्यक्षस्याप्रामाण्यप्रसङ्गात्, तद्दर्शितेऽर्थे विकल्पप्रतीक्षणात्तस्यैव प्रामाण्यमासज्येत। तद्गृहीतमेवार्थमसावभिलापयतीति चेत्, शब्दप्रतिपादितं हेतुं प्रमाणान्तरं समर्थयते इति समानो न्यायः॥ ८॥

शाब्दं च द्विधा भवति– लौकिकं शास्त्रजं चेति। तत्रेदं द्वयोरपि साधारणं लक्षणं प्रतिपादितम्, समर्थनं पुनरविप्रतारकवचनप्रभवस्येहादिवाक्यप्रस्ताव एव लौकिकस्य विहितम्, शास्त्रजस्य तु विधातव्यमिति यादृशः शास्त्रात्तज्जातं प्रमाणतामनुभवति तद्दर्शयति –

कृत्रिमः पुरुषोपयोगी शक्यानुष्ठानो वेति। वाशब्दः समुच्चये, ततोऽयमर्थः– पुरुषोपयोगी शक्यानुष्ठानश्च योऽर्थः स परमोऽकृत्रिम इत्युच्यते, तत्र पुरुषोपयोगी इत्यनेन शक्यानुष्ठानानामपि शवशरीरोद्वर्तनादीनां पुरुषानुपयोगिनां निरासः, शक्यानुष्ठान इत्यनेन तु पुरुषोपयोगिनामपि ज्वरहरशेषशिखारत्नालंकारादीनां प्रतिक्षेपः। विकल्पार्थो वाशब्दः, तदयमर्थः– पुरुषोपयोगी शक्यानुष्ठानो वा अर्थोऽकृत्रिम इत्युच्यते। अशक्यानुष्ठानस्य तक्षकालंकारादेः परमार्थतः पुरुषानुपयोगित्वात्; पुरुषानुपयोगिनश्च मृतकोद्वर्तनादेस्तत्त्वतः पुरुषधर्मवद्विधातुमशक्यत्वादिति। पदाच्छाब्दाभावमाहेति। प्रवृत्तिविषयव्यवस्थापकं हि प्रमाणम्, न च पदेभ्यो यः पदार्थप्रत्ययस्तेन नियतो विषय उपस्थाप्यते, येन घटार्थी कुतश्चिन्निवृत्य क्वचित् प्रवर्तेत; नियतदेशे हि वस्तुनि पुमान् प्रवर्तते, न च केनचिद्देशेन विशिष्टो घटो घटशब्देनोपदर्शितः, तन्न पदप्रभवप्रत्ययस्य शाब्दप्रमाणत्वम्। तदिति शाब्दम्। तेन शब्देन। तस्य हेतोः॥ ८॥

आप्तोपज्ञमनुल्लङ्घ्यमदृष्टेष्टविरोधकम् ।
तत्त्वोपदेशकृत्सार्वं शास्त्रं कापथघट्टनम् ॥९॥

शास्ति शिक्षयति जीवाजीवादि तत्त्वं ग्राहयति, शिष्यतेऽनेनेति वा शास्त्रम् । तत् किंभूतमिति तद्विशेषणान्याह– आप्तः प्रक्षीणाशेषरागादिदोषगणः, तेन उपज्ञम् आदावुपलब्धम् । अनेनापौरुषेयापोहमाह, तस्य प्रमाणबाधितत्वात्; पुरुषव्यापाराभावे वचनानुपलब्धेः, उपलम्भेऽपि तदर्थानवगमात्, तदर्थनिश्चयार्थं पुरुषाश्रयणे गजस्नानन्यायप्रसङ्गात्, तस्य रागादिकलुषितत्वेन वितथार्थकथनप्रवृत्तेः तदनुष्ठानादपि स्वकार्यसिद्धौ प्रणयनार्थमपि पुरुषः किं नेष्यते ? विशेषाभावात् । तन्न क्षीणदोषवचनं व्यतिरिच्यान्यतः प्रेक्षावतां परलोकादावदृष्टेऽर्थे प्रवृत्तिर्युक्ता, तत् तदेव शास्त्रं, निरुपचरितशब्दार्थोपपत्तेरित्यास्तां तावत् । अत एव उल्लङ्घ्यते प्राबल्येन गम्यते अभिभूयते अन्यैरित्युल्लङ्घ्यम्, ततोऽन्यद् अनुल्लङ्घ्यम् सर्ववचनातिशायीति यावत् । अत एव दृष्टेन प्रमाणनिर्णीतेनेष्टस्य तद्वाच्यस्य विरोधो यस्मिंस्तत् तथा तदेव, यदि वा, दृष्टः प्रमाणेन, इष्टो वचनान्तरेण, तयोर्विरोधकम्, तद्विरुद्धार्थाभिधानात्, ततोऽन्यददृष्टेष्टविरोधकम्, अबाधार्थाभिधायीत्यर्थः । तदियता शास्त्रस्य स्वार्थसंपदुक्ता, अधुना तत्त्वोपदेशादीनां परार्थत्वात् परार्थसंपदमाह– तत्त्वं जीवादयः पदार्थाः, प्रमाणप्रतिष्ठितत्वात्, तेषामुपदेशः स्वरूपप्रकाशनम्, तद्रक्षणादिविधानं वा, तं करोति तत्त्वोपदेशकृत्, अत एव सार्वं सर्वस्मै हितम्, प्राणिरक्षणोपायोपदेशपरमपददायितया विश्वजनीनत्वात् । एतेन परार्थसंपादकत्वमुक्तम् । अधुना परेषामेवानर्थपरिघातित्वमाह– कुत्सिताः पन्थानः कापथाः तीर्थान्त-

आप्त इत्यादि । उपज्ञायते आदौ उपलभ्यते स्म इत्युपज्ञा, आतश्चोपसर्गे (पा० ३-१-१३६)—इति कर्मण्यङ्, तत आप्तस्योपज्ञा आप्तोपज्ञमिति; तत्पुरुषाधिकारे उपज्ञोपक्रमे (पा० २-४-२१) इति सूत्रेण उपज्ञान्तस्य नपुंसकत्वम्, तेनोपज्ञमिति तु नात्र-बुध्यते; वाक्ये नपुंसकत्वविधानाभावात् । गजस्नानन्यायेत्यादि । यथा–गजोऽम्भसा रजोवियुक्तमात्मानं विधाय पुनरेव रजोभिरात्मानं मलिनयति, तथा त्वमपि रागद्वेषोपहत-पुरुषप्रणयनसमुत्थं वेदानां कालुष्यमपौरुषेयत्वाभ्युपगमेन निराकृत्य व्याख्यानार्थं पुनरपि तथाभूतं पुरुषमभ्युपगच्छन् तदेवाङ्गीकुरुषे इति । तदनुष्ठानादिति । अनुष्ठानं व्याख्यातुर्व्याख्यानलक्षणो व्यापारस्तस्मात् । स्वकार्यस्य परलोकादावदृष्टेऽर्थे प्रवृत्तिरूपस्य सिद्धाविति अभ्युपगम्यमानायामिति शेषः । दृष्टेनेत्यादि इदमर्थकथनमात्रम्, समासविग्रहस्त्वयम्- इष्टस्य विरोधः, दृष्टेन इष्टविरोधः न विद्यते दृष्टेष्टविरोधो यत्र तत्तथा । तद्वाच्यस्येति शास्त्राभिधेयस्य । सर्वस्मै हितमिति । अस्मिन् वाक्ये सर्वाण्णो वा (सि० हे० ७-१-४३) इति हितेऽर्थे णप्रत्ययः । विश्वजनीनत्वादिति विश्वे च ते जनाश्च विश्वजनास्तेभ्यो हितं विश्वजनीनम् पञ्चसर्वविश्वाज्जनात्कर्मधारये (सि०हे० ७-१-४१)– इति खः, तस्य इनादेशे

राणि, तेषां घट्टनं विचालकं निराकारकम्, सर्वजनापकारिकुमतविध्वंसकमित्यर्थः। ईदृशादेव शास्त्राज्जातं शाब्दं प्रमाणम्, नान्येभ्यः, विप्रलम्भकत्वात्तेषामिति ॥९॥

अधुना परार्थानुमानलक्षणं वक्तव्यम्, तच्च प्रत्यक्षेऽपि पश्यन् एकयोगक्षेमत्वात् सामान्येनाह –

**स्वनिश्चयवदन्येषां निश्चयोत्पादनं बुधैः ।**
**परार्थं मानमाख्यातं वाक्यं तदुपचारतः ॥१०॥**

अत्र परार्थं मानमिति लक्ष्यम्, स्वनिश्चयवदित्यादि लक्षणम्, स्व आत्मा तस्य निश्चयः प्रमेयाधिगमः, तद्वदन्येषां प्रतिपाद्यानां निश्चयोत्पादनं प्रमेयपरिच्छेदज्ञानप्रादुर्भावनम्, यथा आत्मनोऽर्थनिर्णयस्तथा परेषां निर्णयजननमित्यर्थः। बुधैर्विद्वद्भिः। परस्मै अर्थः प्रयोजनं येन तत् परार्थम्, मीयतेऽनेनेति मानम्, आख्यातं कथितम्। ननु च यदि निश्चयोत्पादनं परार्थमानम्, तथा ज्ञानमपि परप्रत्यायनाय व्याप्रियमाणं परार्थं प्राप्नोतीत्याह,–वाक्यं परार्थं, न ज्ञानम्, तस्यैवानन्तर्येण व्यापारात्, परप्रयोजनमात्रत्वाच्च, इतरस्य तु व्यवहितत्वात्, स्वपरोपकारित्वाच्च। कथं वचनमज्ञानरूपं प्रमाणमित्याह– तदुपचारतः तस्य ज्ञानस्योपचारोऽतद्रूपस्यापि तदङ्गतया तद्रूपत्वेन ग्रहणम्। तत इदमुक्तं भवति– प्रतिपाद्यगतमुत्पश्यमानं यज्ज्ञानं तदव्यवहितकारणत्वात् वचनमप्युपचारेण प्रमाणमित्युच्यते। तत्रानुमानस्य पारार्थ्यं परैरभ्युपगतमेव प्रत्यक्षस्य न प्रतिपद्यन्ते किलेदं शब्दप्रवेशशून्यं स्वलक्षणग्राहीति नैतद्गोचरः परेभ्यः प्रतिपादयितुं पार्यते। न च शब्दात परस्य स्वलक्षणग्रहणदक्षं प्रत्यक्षमुन्मङ्क्ष्यति, शब्दस्य विकल्पोत्पादितत्वेन परस्यापि विकल्पोत्पादकत्वात्।

तदुक्तम्—

विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः ।
कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि ॥ इति ॥ १० ॥

निर्विकल्पकं च प्रत्यक्षम्, अतो न शब्दजन्यमित्यतोऽनुमानं दृष्टान्तीकृत्य प्रत्यक्षस्यापि परार्थतां साधयितुमाह—

च रूपम्। कापथा इति। कुशब्दस्य पथि शब्दे 'पथ्यक्षेषठर्थे' इत्याकारः। ॥ ९ ॥

**परप्रयोजनमात्रत्वादिति।** परस्य प्रयोजनं परप्रयोजनम्, तदेव परप्रयोजनमात्रम्, मात्रं कार्त्स्न्येऽवधारणे इति वचनात्, अवधारणार्थोऽत्र मात्रध्वनिः। यद्यपि कस्यचित्तथाविधाभ्यासाद् वचनमुच्चारयतः स्वयमप्यर्थप्रतिपत्तिर्वाक्यस्य प्रयोजनत्वम्, तथाप्यल्पत्वान्नेह विवक्षितमिति। **व्यवहितत्वादिति**। ज्ञानानन्तरं हि विवक्षा, स्थानकरणाभिघातादिना शब्दोत्पत्तौ परसंताने ज्ञानोत्पादादिति। **विकल्पयोनय इति**। विकल्पो योनिः कारणं येषां तथा ॥ १० ॥

प्रत्यक्षेणानुमानेन प्रसिद्धार्थप्रकाशनात् ।
परस्य तदुपायत्वात्परार्थत्वं द्वयोरपि ॥ ११ ॥

प्रत्यक्षेणाप्यनुमानेनेव प्रसिद्धार्थप्रकाशनात् स्वप्रतीतप्रमेयप्रत्यायकत्वात् परार्थत्वं प्रतिपाद्यप्रयोजनत्वं द्वयोरपि प्रत्यक्षानुमानयोः, तुल्यकारणत्वात्, नानुमानस्यैवैकस्येत्यभिप्रायः। इह चाश्रूयमाणत्वात् तदर्थगमनाच्च अपीवशब्दौ लुप्तनिर्दिष्टौ द्रष्टव्यौ। प्रत्यक्षप्रतीतार्थप्रत्यायनं च प्रतिजानानस्यायमभिप्रायः– यत् परो मन्यते, नैतद् गोचरं परेभ्यः प्रतिपादयितुं पार्यत इति। तदयुक्तम्, निर्विकल्पकाध्यक्षापोहेन व्यवसायरूपस्य प्रत्यक्षस्य प्रागेव साधितत्वात्, तद्गोचरस्य कथंचिद् विकल्पगम्यत्वेन शब्दप्रतिपाद्यत्वात्। तद्यथा अनुमानप्रतीतोऽर्थः परस्मै प्रतिपाद्यमानो वचनरूपापन्नः परार्थमनुमानम्, तथा प्रत्यक्षप्रतीतोऽपि, परार्थं प्रत्यक्षम्, परप्रत्यायनस्य तुल्यत्वाद्, वचनव्यापारस्यैव भेदात्। तथा हि–अनुमानप्रतीतं प्रत्याययन्नेवं वचनयति– अग्निरत्र, धूमात्, यत्र यत्र धूमस्तत्र तत्राग्निः, यथा महानसादौ, वैधर्म्येण वा, अग्न्यभावे न क्वचिद् धूमः, यथा जलाशयादौ, तथा धूमोऽयम्, तस्माद् धूमादग्निरत्रेति। अव्युत्पन्नविस्मृतसंबन्धयोस्तथैव प्रतिपादयितुं शक्यत्वात्, स्मर्यमाणे संबन्धे पुनरेवम्– अग्निरत्र धूमोपपत्तेः। वैधर्म्येण–अग्निरत्र, अन्यथा धूमानुपपत्तेः। प्रत्यक्षप्रतीतं पुनर्दर्शयन्नेतावद्वक्ति - पश्य राजा गच्छति, ततश्च वचनाद्द्विविधादपि समग्रसामग्रीकस्य प्रतिपाद्यस्यानुमेयप्रत्यक्षार्थविषया यतः प्रतीतिरुल्लसति, अतो द्वयोरपि परार्थतेत्याह– परस्य तदुपायत्वात् प्रतिपाद्यस्य प्रतीतिं प्रति प्रतिपादकस्थप्रत्यक्षानुमाननिर्णीतार्थप्रकाशनकारणत्वादित्यर्थः। एतेन पूर्वकारिकोक्तोपचारकारणं च लक्षयति। यच्चोक्तम् — न शब्दात् परस्य प्रत्यक्षोत्पत्तिः, तस्य विकल्पजनकत्वात्, प्रत्यक्षस्य स्वलक्षणविषयत्वेन निर्विकल्पकत्वात्। तदयुक्तम्, सामान्यविशेषात्मकार्थविषयस्य निर्णयरूपस्य तस्य कथंचिदेकविषयता शब्दोत्पाद्यत्वाविरोधात्, एवंविधस्य च प्रागेव समर्थनात्। चक्षुरादिसामग्रीतस्तदुत्पद्यते न शब्दादिति चेत्। अनुमानमपि प्रत्यक्षादिनिश्चिताद् हेतोरविस्मृतसंबन्धस्य प्रमातुरुल्लसति, न शब्दात्, अतस्तस्यापि परार्थता विशीर्येत। समर्थहेतुकथनात् तत्र वचनस्य परार्थतेति चेत्, अत्रापि दर्शनयोग्यार्थप्रतिपादनादिति ब्रूमः। तन्न प्रत्यक्षपरोक्षयोः पारार्थ्यं प्रति विशेषोपलब्धिरिति मुच्यतां पक्षपातः॥ ११॥

---

**प्रतिपादकस्थेत्यादि**। प्रतिपादकस्थ प्रत्यक्षानुमाननिर्णीतार्थस्य प्रकाश्यतेऽर्थः परेभ्योऽनेनेति प्रकाशनं वचनं कारणं यस्य परस्य, तस्य भावस्तत्त्वं तस्मात्। **एतेनेति**। परप्रतीतिं प्रति वचनस्योपायताप्रदर्शनेन पूर्वकारिकोक्तेति वाक्यं तदुपचारतः इति। **तस्येति**। प्रत्यक्षस्य। **एकविषयतयेति**। शब्देन सहेति शेषः, अयमभिप्रायः–सामान्यविशेषात्मकं वस्तु शब्दानां गोचरः, प्रत्यक्षमपि कथंचित् सामान्यविशेषात्मकवस्तुविषयम्, ततः

तदेवं द्वयोरपि परार्थतां प्रतिपाद्य तत्स्वरूपमाह—

प्रत्यक्षप्रतिपन्नार्थप्रतिपादि च यद्वचः ।
प्रत्यक्षं प्रतिभासस्य निमित्तत्वात्तदुच्यते ॥ १२ ॥

यद्वचः प्रत्यक्षप्रतिपन्नार्थप्रतिपादि साक्षात्कारिज्ञानगोचरकथनचतुरं तत् प्रत्यक्षमुच्यत इति संबन्धः । तच्च प्रत्यक्षरूपमेवोच्यमानं प्रत्यक्षं, विप्रतिपन्नं प्रति पुनरनुमानद्वारेणोच्यमानमनुमानमेवेति । चशब्देनानेकार्थत्वाद् दर्शयति– वचनं कुतः प्रत्यक्षम् इत्याह–प्रतिभासस्य निमित्तत्वात् प्रतिपाद्यप्रत्यक्षप्रकाशहेतुत्वाद् उपचारेणोच्यत इत्यर्थः ॥ १२ ॥

अनुमानमाह—

साध्याविनाभुवो हेतोर्वचो यत्प्रतिपादकम् ।
परार्थमनुमानं तत्पक्षादिवचनात्मकम् ॥ १३ ॥

हिनोति गमयति अर्थमिति हेतुः, तस्य साध्याविनाभुवः प्राङ्निरूपितस्य यद्वचः प्रतिपादकं संदर्शकं तद् अनुमानप्रकाशहेतुत्वात् परार्थमनुमानम् । तत्कीदृश- मित्याह– पक्षो वक्ष्यमाणलक्षणः स आदिर्येषां हेतुदृष्टान्तोपनयनिगमादीनां तानि तथा, तेषां वचनानि प्रतिपादका ध्वनयः, तान्येवात्मा स्वरूपं यस्य तत् पक्षादि- वचनात्मकम् । ननु च हेतुप्रतिपादकं वचः परार्थमनुमानमित्यभिधाय तत् पक्षा- दिवचनात्मकमिति वदतः पूर्वापरव्याहता वाचोयुक्तिः, नैतदस्ति, एवं मन्यते नैकः प्रकारः परार्थानुमानस्य, किं तर्हि यथा परस्य सुखेन प्रमेयप्रतीतिर्भवति तथा यत्नतः प्रत्यायनीयः । तत्र दशावयवं साधनं प्रतिपादनोपायः । तद्यथा– पक्षादयः पञ्च, तच्छुद्धयश्च । तत्र यदा प्रतिपाद्यप्रक्रमादेव निर्णीतपक्षोऽविस्मृतदृष्टान्तः स्मार्य- प्रतिबन्धग्राहकप्रमाणो व्युत्पन्नमतित्वात् शेषावयवाभ्यूहनसमर्थश्च भवति, यद्वा अत्यन्ताभ्यासेन परिकर्मितमतित्वात् तावतैव प्रस्तुतप्रमेयमवबुध्यते, तदा हेतुप्रति- पादनमेव क्रियते, शेषाभिधानस्य श्रोतृसंस्काराकारितया नैरर्थक्यादित्यादौ हेतुप्रति- पादनं सूत्रकृता परार्थमनुमानमुक्तम् । यदा तु प्रतिपाद्यस्य नाद्यापि पक्षनिर्णयः,

---

सामान्यविशेषात्मकोऽर्थः प्रत्यक्षप्रतिपन्नः परस्मै प्रतिपाद्यमान परार्थप्रत्यक्षं भवति ॥ ११ ॥

**तच्चेति** । वचः । **प्रत्यक्षरूपमिति** । पश्य मृगो याति इति प्रत्यक्षरूपतया प्रति- पादकत्वाद्वचोऽपि तथोच्यते ॥ १२ ॥

**वाचोयुक्तिरिति** । पश्यद्वाग्दिशो हरयुक्तिदण्डे ( सि० हे० ३–२–३२) इति षष्ठ्या अलुक्समासः । **अविस्मृतेत्यादि** । दृष्टान्तेन स्मार्यः स चासौ प्रतिबन्धो व्याप्तिश्च तस्य ग्राहकम् , तच्च तत्प्रमाणं च, ततो न विस्मृत तद् यस्य स तथा । **परिकर्मितमति- त्वादिति** । परिकर्म सजातमस्या इति, तारकादेराकृतिगणत्वादितच्प्रत्ययः, ततः परि- कर्मिता मतिर्यस्येति विग्रहः । **अकाण्डे** अप्रस्तावे । **तत्सामर्थ्यमिति** । पक्षादीनां सामर्थ्यम् ।

तदा अकाण्ड एव हेतूपन्यासोऽदृष्टमुद्गरपातायमानः स्यादिति पक्षोऽपि निर्दिश्यते। तथास्मर्यमाणे प्रतिबन्धग्राहिणि प्रमाणे दृष्टान्तोऽपि वर्ण्येत, अन्यथा हेतोः सामर्थ्यानवगतेः। स्मृतेऽपि प्रमाणे दार्ष्टान्तिके योजयितुमजानानस्योपनयो दर्श्यते; तथापि साकाङ्क्षस्य निगमनमुच्यते, अन्यथा निराकुलप्रस्तुतार्थासिद्धेः। तथा यत्र पक्षादौ स्वरूपविप्रतिपत्तिस्तत्र तच्छुद्धिः प्रमाणेन कर्तव्या, इतरथा तेषां स्वसाध्यासाधनात्। सर्वेषां चामीषां साधनावयवत्वम्, प्रतिपाद्यप्रतीत्युपायत्वात्। ननु च स्वनिश्चयवत् परनिश्चयोत्पादनं परार्थमनुमानमुक्तम्, न च स्वार्थानुमानकाले क्रमोऽयमनुभूयते, संबन्धवेदिनो हेतुदर्शनमात्रात् साध्यप्रतीतिसिद्धेः, न हि प्रतिपत्ता पक्षं कृत्वा ततो हेतुं निभालयति, नापि दृष्टान्तादिकं विरचयति, तथा प्रतीतेरभावात्, किं चान्वयव्यतिरेकाभ्यां हेतोरेव सामर्थ्यमुन्नीयते, न पक्षादीनाम्, तद्व्यतिरेकेणापि साध्यसिद्धेः तथापि तेषां साधनांशत्वकल्पनेऽनवस्थाप्रसङ्गात्। यदि च तत्सामर्थ्यं स्यात्, तदा पक्षोपन्यासमात्रादेव साध्यावगतेः हेतुरानर्थक्यमश्नुवीत, उत्तरावयवाश्च, एवं हि तत्सामर्थ्यं सिद्ध्येन्नान्यथा। तस्माद्य एव परनिरपेक्षं साध्यं बोधयति स एव हेतुः साधनम्, न पक्षादय इति। अत्रोच्यते– स्वनिश्चयवत् परनिश्चयोत्पादनं परार्थमनुमानमुक्तमित्यादि यदुक्तं तदयुक्तम्, केवलं तदर्थं न जानीषे, निश्चयापेक्षयैव वतिना तुल्यताभिधानात, न पुनः सर्वसामान्यमभिप्रेतम्, अन्यथा ध्वनिमनुच्चारयन् स्वार्थानुमाने साध्यमवबुध्यते इति, तदनुच्चारणेन परनिश्चयोत्पादनं प्रसज्येत, न चैतदस्ति, शब्दानुच्चारणे परप्रतिपादनासंभवात्, तदर्थं शब्दाङ्गीकरणे येन विना परप्रतिपादनासंभवः तत्तदुररीकर्तव्यम्, समानन्यायात्, न च पक्षादिविरहे प्रतिपाद्यविशेषः प्रतिपादयितुं शक्यः हेतुगोचरादितत्साध्यार्थप्रतीतिविकलतया तस्य साकाङ्क्षत्वात्, तथा च बुभुत्सितार्थबोधाभावादप्रत्यायित एव तिष्ठेत्, अतस्तद्बोधनार्थं पक्षादयो दर्शनीयाः इति तेऽपि साधनांशाः स्युः। यच्चोक्तम्—अन्वयव्यतिरेकानुकरणाभावान्न साधनम्, हेतुमात्रादपि साध्यसिद्धेः, तदयुक्तम्, अविप्रतारकतानिश्चितपुरुषवचनमात्रादपि अग्निरत्र इत्यादिरूपात् क्वचित्प्रमेयोऽर्थः सिध्यतीति हेतोरप्यसाधनताप्रसङ्गात्, तद्विरहेणापि साध्यसिद्धेः, युक्तं चैतत्, अविप्रतारकवचनस्य प्रागेव प्रामाण्यप्रसाधनात्। यच्चोक्तम्—यद्यमीषां सामर्थ्यं स्यात्, तदा पक्षमात्रादेव साध्यप्रतीतेर्हेतोर्वैयर्थ्यं स्यादिति, तदयुक्ततरम्, भवत्पक्षेऽपि समानत्वात्, तत्रापि समर्थहेतूपन्यासादेव साध्यावगतेः, अन्यथा समर्थतायोगात्। पश्चात्तस्यैव प्रमाणेन समर्थनं सर्वत्र गृहीत-

---

तत्साध्येत्यादि। तेषां पक्षादीनां साध्य· प्रतिपाद्यो योऽर्थस्तस्य प्रतीतिविकलता, तया कृत्वा हेतुभूतया वा तस्य प्रतिपाद्यस्य साकाङ्क्षत्वात्। पश्चात्तस्यैव प्रमाणेन समर्थनमिति। यत् सत् तत्सर्वं क्षणिकमिति व्याप्त्यालिङ्गितहेतूपन्यासानन्तरं अक्षणिके क्रमयौगपद्याभ्यामर्थ-

व्याप्तिकस्य च पुनः पक्षधर्मिण्युपसंहरणमनर्थकतां प्राप्नुवत् केन निवार्येत। तदभावे हेतोः सामर्थ्यं नावगम्यते तेन सार्थकमिति चेत्, पक्षादीनपि विरहय्य प्रतिपाद्यविशेषः प्रतिपादयितुं न पार्यते इति तेषामपि सार्थकता न दुरुपपादेति मुच्यतामाग्रहः। तस्माद्धेतुवत् पक्षादयोऽपि साधनम्, हेतोरपि क्वचित् प्रतिपाद्ये तदपेक्षतया तन्निरपेक्षतासिद्धेरिति, तदिदं सकलमाकलय्योक्तं तत्पक्षादिवचनात्मकमिति ॥ १३ ॥

तदेवमर्थतः पक्षादीन् प्रस्तुत्य तावत् पक्षलक्षणमाह—

**साध्याभ्युपगमः पक्षः प्रत्यक्षाद्यनिराकृतः।**
**तत्प्रयोगोऽत्र कर्तव्यो हेतोर्गोचरदीपकः ॥ १४ ॥**

पच्यत इति पक्षः, व्यक्तीक्रियते इति भावः। किंभूत इत्याह-साध्यस्य अनुमेयस्य अभ्युपगमोऽङ्गीकरणम्, प्राश्निकादीनां पुरतः प्रतिज्ञास्वीकार इत्यर्थः। किमभ्युपगममात्रम्? नेत्याह— प्रत्यक्षाद्यनिराकृतः इति। प्रत्यक्षं साक्षात्कारि संवेदनम्, आदिशब्दादनुमानस्ववचनलोका गृह्यन्ते, तैरनिराकृतोऽबाधितः पक्ष इति संबन्धः। तद्यथा—सर्वमनेकान्तात्मकम्, अस्ति सर्वज्ञः इत्यादि वा; अयं च केवलमेष्टव्यो न पुनः परार्थानुमानकाले वचनेनाभिधातव्यः इति यो मन्येत तं प्रत्याह— तस्य पक्षस्य प्रयोगोऽभिधानमत्र परार्थानुमानप्रस्तावे कर्तव्यो विधेयः। कुत इत्याह— हेतोः प्राङ्निरूपितस्य गोचरदीपक इति, निमित्तकारणहेतुषु सर्वासां प्रायो दर्शनम् इति वचनात्, भावप्रधानत्वाच्च निर्देशस्य, विषयसंदर्शकत्वादित्यर्थः। अयमत्राभिप्रायः— न हि सर्वत्र प्रतिवादिनः प्रक्रमादेव निर्णीतपक्षस्य कूर्चशोभापुरःसरं हेतुरुपन्यस्यते, अपि तु क्वचित् कथंचित् ॥ १४ ॥

ततो यदाद्यापि प्रतिपाद्यः पक्षार्थं न जानीते, तदा अकाण्डे एव हेतावुच्यमाने विषयव्यामोहाद् भ्रान्तिलक्षणो दोषः स्यादित्याह—

---

क्रियाविरोधादिति बाधकप्रमाणेन सत्त्वाख्यहेतोः समर्थनम्। **पुनः पक्षधर्मिण्युपसंहरणमिति।** कृतकश्च शब्द इत्यादिरूपम्। **तदपेक्षतया** पक्षाद्यपेक्षतया ॥ १३ ॥

**नहीत्यादि।** अयमभिप्रायः—क्वापि निर्णीतपक्षे प्रतिवादिनि हेतुः प्रयुज्यते, क्वाप्यनिर्णीतपक्षे। तत्र यदा निर्णीतपक्षे प्रतिवादिनि हेतुः प्रयुज्यते, तदा निरर्थकत्वात् पक्षोपन्यासोऽस्माभिर्न क्रियते एव। द्वितीये तु पक्षे विषयदर्शकत्वेन सफलत्वादवश्यं कार्य एव। कूर्चशोभायाः पुरःसरं प्रथमम्, यस्मिन् हेतावुपन्यस्ते कूर्चशोभा सपद्यते, तत्त्वतो वैलक्ष्याभावः, सावष्टम्भता भवतीति यावत्, अथवा कूर्चशोभा पुरःसर यत्रेति, अस्मिन् पक्षे अयममिप्रायः—यदा सम्यग्भूतं किंचिद द्वित्वादिकं प्रतिपादयितुमारभ्यते तदा तत्प्रतिपादनादर्वागपि कूर्चशोभा सावष्टम्भता, श्मश्रुपरामर्शनं वा भवतीति ॥ १४ ॥

अन्यथा वाद्यभिप्रेतहेतुगोचरमोहिनः ।
प्रत्याय्यस्य भवेद्धेतुर्विरुद्धारेकितो यथा ॥ १५ ॥

अन्यथा इति उक्तविपरीताश्रयणे पक्षप्रयोगाकरणे इत्यर्थः । वादिनो हेतूपन्यासकर्तुरभिप्रेतोऽभिमतः स चासौ हेतुगोचरश्च वाद्यभिप्रेतहेतुगोचरः, तत्र मुह्यति दोलायते तच्छीलश्च यः, तस्य प्रत्याय्यस्य प्रतिवादिनो हेतुः विरुद्धारेकितो भवेद् विरोधशङ्काकलङ्कितः स्यादित्यर्थः । ततश्च सम्यग्हेतावपि विपक्षे एवायं वर्तते इति व्यामोहाद् विरुद्धदूषणमभिदधीत, पक्षोपन्यासात्तु निर्णीतहेतुगोचरस्य नैष दोषः स्यादित्यभिप्रायः । अमुमेवार्थं स्पष्टदृष्टान्तेनाह यथा इति । तदुपन्यासार्थः ॥ १५ ॥

धानुष्कगुणसंप्रेक्षिजनस्य परिविध्यतः ।
धानुष्कस्य विना लक्ष्यनिर्देशेन गुणेतरौ ॥ १६ ॥

यथा लक्ष्यनिर्देशं विना धानुष्कस्येषुं प्रक्षिपतो यौ गुणदोषौ तौ तद्दर्शिजनस्य विपर्यस्तावपि प्रतिभातः, गुणोऽपि दोषतया दोषोऽपि वा गुणतया, तथा पक्षनिर्देशं विना हेतुमुपन्यस्यतो वादिनो यौ स्वाभिप्रेतसाध्यसाधनसमर्थत्वासमर्थत्वलक्षणौ गुणदोषौ तौ प्राश्निकप्रतिवाद्यादीनां विपरीतावपि प्रतिभात इति भावार्थः । अक्षरार्थस्तु धनुषा चरति धानुष्कस्तस्य गुणो लक्ष्यवेधप्रावीण्यलक्षणस्तत्र प्रेक्षकाणां कुतूहलमिति तस्यैवोपादानम्, अन्यथा दोषोऽपि द्रष्टव्यः, तत्संप्रेक्षिजनस्य तत्संप्रेक्षणशीललोकस्य परिविध्यतो यथाकथंचिद् बाणं मुञ्चत इत्यर्थः, धानुष्कस्य विना लक्ष्यनिर्देशेन चापधरस्य वेध्यनिष्टङ्कनमृते यौ गुणेतरौ गुणदोषौ तौ यथा विरुद्धारेकितौ भवतः, तथा वादिनोऽपीत्यर्थः । तस्मादविज्ञाततदर्थे प्रतिवादिनि वादिधानुष्केण पक्षलक्ष्यं निर्दिश्यैव हेतुशरः प्रयोक्तव्य इति स्थितम् ॥ १६ ॥

सांप्रतं हेतोर्लक्षणावसरः, तच्च स्वार्थानुमानवद् निर्विशेषं द्रष्टव्यम्, प्रयोगस्तु तत्र न दर्शितः, स्वार्थानुमानस्य बोधरूपत्वात्, इह तु दर्शनीयः, परार्थानुमानस्य वचनरूपत्वात्, अतस्तं दर्शयति–

हेतोस्तथोपपत्त्या वा स्यात्प्रयोगोऽन्यथापि वा ।
द्विविधोऽन्यतरेणापि साध्यसिद्धिर्भवेदिति ॥ १७ ॥

स्वार्थानुमानप्रस्तावे हि परप्रणीतलक्षणान्तरव्यपोहेन साध्यव्यतिरेकात्

---

विरुद्धदूषणमभिदधीतेति । यत् कृतकं तदनित्यम्, यथा घटः, कृतकश्च शब्द इत्युक्ते हि यद्यपि नित्यत्वे साध्ये कृतकत्वमत्र हेतूकृतम्, कृतकत्वानित्यत्वयोश्च व्याप्तिर्दर्शितेत्येवं विरुद्धतामभिदध्यादिति भावः ॥ १५ ॥

धनुषा चरतीति । अस्मिन् वाक्ये तेन इति सूत्रेण चरत्यर्थे ठक् । इत्कु इक् इति बाधनार्थं को शश्चात्तादुदोरिसुसः इत्यनेन कादेशः । अविज्ञाततदर्थ इति । अविदितपक्षार्थे ॥ १६ ॥

सामस्त्येन हेतोर्व्यावृत्तिरेवैकं लक्षणमिति निर्णीतम्, परार्थानुमानेऽपि तदेव प्रकाशनीयम्, वचनरचना तु क्वचित् कथंचित् प्रवर्तेत इत्यभिप्रायवांस्तद्द्वैविध्यमाह-- हेतोर्द्विविधः प्रयोगः स्यादिति संबन्धः। कथमित्याह--तथैव साध्यसद्भावे एवोपपत्तिर्विद्यमानता, तया तथोपपत्त्या, यथा- अग्निरत्र, धूमस्य तथैवोपपत्तेरिति। अन्यथापि वा इत्यनेन अवयवे समुदायोपचारादन्यथानुपपत्तिं लक्षयति। अन्यथा साध्यव्यतिरेके अनुपपत्तिरविद्यमानतैव तया वा अन्यथानुपपत्त्या हेतोः प्रयोगः स्यात्, यथा- अग्निरत्र, धूमस्यान्यथानुपपत्तेरिति। एते च द्वे अप्येकस्मिन् साध्ये प्रयोक्तव्ये इति यो मन्येत, तच्छिक्षणार्थमाह-अन्यतरेणापि तथोपपत्तिप्रयोगेण अन्यथानुपपत्तिप्रयोगेण वा साध्यस्य साध्यप्रतिपिपादयिषितार्थस्य सिद्धिर्निष्पत्तिः प्रतिपाद्यप्रतीतावारोहणं भवेद्, इति यस्मात्, तस्मान्न द्वे अपि प्रयोक्तव्ये, प्रयोगद्वयेऽपि यस्माद् वचनरचना भिद्यते नार्थः, प्रयोगस्य च साध्यसाधनफलम्, तच्चेदेकेनैव सिध्यति, द्वितीयप्रयोगः केवलं वक्तुरकौशलमाचक्षीत, नैरर्थक्यादित्यभिप्रायः ॥१७॥

अधुना दृष्टान्तलक्षणावसरः। स च द्वेधा साधर्म्येण वैधर्म्येण च। तत्र साधर्म्यदृष्टान्तमधिकृत्याह-

साध्यसाधनयोर्व्याप्तिर्यत्र निश्चीयतेतराम्।
साधर्म्येण स दृष्टान्तः संबन्धस्मरणान्मतः ॥ १८ ॥

दृष्टयोरवलोकितयोः सामर्थ्यात् साध्यसाधनयोः अन्तःपरिनिष्ठितिः अन्वयाद् व्यतिरेकाद्वा साध्यसाधनभावव्यवस्थितिनिबन्धना यस्मिन्निति दृष्टान्तः, समानो धर्मोऽस्येति सधर्मा तद्भावः साधर्म्यं तेन साधर्म्येण। स किंविधो भवतीत्याह- साध्यं जिज्ञासितार्थात्मकम्, साधनं तद्गमको हेतुः, तयोः साध्यसाधनयोर्व्याप्तिः, इदमनेन विना न भवति इत्येवंरूपा, यत्र क्वचिन्निश्चीयतेतरां अतिशयेन निर्णीयते स साधर्म्यदृष्टान्तः। यथा-- अग्निरत्र, धूमस्य तथैवोपपत्तेः महानसादिवद् इति। अयं चाविस्मृतप्रतिबन्धे प्रतिवादिनि न प्रयोक्तव्य इत्याह-- संबन्धस्मरणात् इति। यब्लोपे पञ्चमी, प्राग्गृहीतविस्मृतसंबन्धस्मरणमधिकृत्य मतोऽभिप्रेतोऽयं नीतिविदाम्, नान्यथा। यदा हि प्रतिपाद्योऽद्यापि संबन्धं साध्याविनाभावित्वलक्षणं नावबुध्यते; तदा प्रमाणेन संबन्धो ग्राहणीयः, न दृष्टान्तमात्रेण, न हि सहदर्शनादेव क्वचित्सर्वत्रेदममुना विना न भवतीति सिध्यति, अतिप्रसङ्गात्।

---

**क्वचिदिति।** प्रतिपाद्यविशेषे ॥ १७ ॥

**साध्यसाधनयोरित्यादि।** अन्वयेन व्यतिरेकेण वा साध्यसाधनभावस्य इदमस्य साध्यमिदमस्य साधनमिति संबन्धस्य व्यवस्था निबन्धनं यस्याः परिनिष्ठितेः सा तथोक्ता। **सधर्मेति।** धर्मादन् केवलात् इति बहुव्रीहौ धर्मशब्दादन् समासान्तः।

गृहीते च प्रतिबन्धे स्मर्यमाणे केवलं हेतुर्दर्शनीयः, तावतैव बुभुत्सितार्थसिद्धेर्दृष्टान्तो न वाच्यः, वैयर्थ्यात्। यदा तु गृहीतोऽपि विस्मृतः कथंचित् संबन्धः, तदा तत्स्मरणार्थं दृष्टान्तः कथ्यते। ननु च कथं त्रिकालसमस्तदेशव्यापिसंबन्धावगतिः? न तावन्निर्णयात्मकमपि प्रत्यक्षं देशकालान्तरसंचरिष्णुनोः साध्यसाधनयोः संबन्धं निरीक्षितुं क्षमते, संनिहितेऽर्थे विशदाध्यवसायेन प्रवृत्तेः। नापि शब्दात्तन्निर्णयः, तस्य परोपदेशरूपतया स्वार्थानुमानाभावप्रसङ्गात्, तत्र परोपदेशाभावात्, तदभावे संबन्धासिद्धेः, तदसिद्धावनुमानानुत्थानादिति। अनुमानात्संबन्धग्रहणे निरवधिरनवस्थानुषज्येत, संबन्धग्राहिणोऽप्यनुमानस्य पुनः संबन्धान्तरग्रहणसव्यपेक्षत्वादिति। अत्रोच्यते– प्रत्यक्षानुमाने द्वे एव प्रमाणे इति येषां मिथ्याभिनिवेशः, तेषामेष दोषो नास्माकम्, अन्वयव्यतिरेकग्राहिप्रत्यक्षानुपलम्भोत्तरकालभाविनोऽव्यभिचरितत्रिकालव्यापिगोचरस्य मतिनिबन्धनस्योहसंज्ञितस्य प्रमाणान्तरस्य संबन्धग्राहितयेष्टत्वात्, तदनिष्टौ दृष्टव्यवहारविलोपप्रसङ्गात्, तद्विलोपे च विचारानर्थक्यप्राप्तेरिति। अत्र प्रकरणे पुनरनुमानात् पार्थक्येनोहो न दर्शितः, संक्षिप्तरुचिसत्त्वानुग्रहप्रवृत्तत्वादस्य, शाब्दं तु पृथक् समर्थितम्, तस्यात्रैव परार्थानुमानोपयोगित्वादित्यास्तां तावत् ॥ १८ ॥

इदानीं वैधर्म्यदृष्टान्तमुपदर्शयन्नाह–

साध्ये निवर्तमाने तु साधनस्याप्यसंभवः।
ख्याप्यते यत्र दृष्टान्ते वैधर्म्येणेति स स्मृतः ॥ १९ ॥

विसदृशो धर्मोऽस्येति विधर्मा, तद्भावो वैधर्म्यम्, तेन वैधर्म्येण दृष्टान्तः। कीदृश इत्याह– साध्ये गम्ये निवर्तमाने असंभवति, तुशब्दोऽवधारणार्थो भिन्नक्रमः, स च साधनस्यासंभव एवेत्यत्र द्रष्टव्यः। ख्याप्यते प्रतिपाद्यते यत्र क्वचित् दृष्टान्ते स वैधर्म्येण भवति, इति शब्देन संबन्धस्मरणादिति ॥ १९ ॥

इदमत्रापि संबध्नाति– अस्यापि स्मर्यमाणे संबन्धे प्रयोगायोगादिति किमर्थं विस्मृतसंबन्धे एव प्रतिवादिनि दृष्टान्तः प्रयुज्यते नान्यदा, इति परवचनावकाशमाशङ्क्याह—

अन्तर्व्याप्त्यैव साध्यस्य सिद्धेर्बहिरुदाहृतिः।
व्यर्था स्यात्तदसद्भावेऽप्येवं न्यायविदो विदुः ॥ २० ॥

अन्यदा हि स्मर्यमाणे वा संबन्धे प्रयुज्येत, अगृहीते वा। यद्याद्यः पक्षः,

---

तन्निर्णयः संबन्धनिर्णयः। तस्येत्यादि। शब्दस्य परोपदेशरूपतया कृत्वा शब्दजन्यज्ञानस्य स्वार्थानुमानत्वं भवतीत्याह–तत्रेत्यादि। तत्र स्वार्थानुमाने ॥ १८ ॥

विधर्मेति। पूर्ववद् ॥ १९ ॥

अन्यदा हीति। संबन्धविस्मरणाभावे ॥ २० ॥

सोऽयुक्तः, यदा सर्वत्र साध्याविनाभाविनं हेतुं स्मरति प्रतिपाद्यः, तदा पक्षेऽपि तमवबुध्य कथं साध्यं न प्रतिपद्येत? ततश्चान्तः पक्षमध्ये व्याप्तिः साधनस्य साध्याक्रान्तत्वमन्तर्व्याप्तिः, तयैव साध्यस्य गम्यस्य सिद्धेः प्रतीतेः बहिर्विवक्षित-धर्मिणोऽन्यत्र दृष्टान्तधर्मिण्युदाहृतिः व्याप्तिदर्शनरूपा व्यर्था निष्प्रयोजना, तत्प्र-त्याय्यार्थाभावादिति । द्वितीयपक्षस्यापि निर्दोषतां निरस्यन्नाह– तदसद्भावेऽप्येवम् संबन्धाग्रहणादन्तर्व्याप्त्यभावेऽप्येवमिति व्यर्थैव बहिरुदाहृतिः, न हि सहदर्शनात् क्वचित् सर्वत्र तद्रूपता सिध्यति, व्यभिचारदर्शनात् । तस्मादगृहीतसंबन्धे प्रतिपाद्ये प्रमाणेन प्रतिबन्धः साध्यः, तत्सिद्धौ तत एव साध्यसिद्धेरकिंचित्करी दृष्टान्तोदाहृति-रिति न्यायविद्वांसो विदुरवबुध्यन्त इति । इह च प्रकरणे शेषावयवानामुपनय-निगमनशुद्धिपञ्चकलक्षणानां संक्षिप्तरुचिसत्त्वानुग्रहपरत्वादस्य यद्यपि साक्षाल्लक्षणं नोक्तम्, तथाप्यत एव प्रतिपादितावयवत्रयाद् बुद्धिमद्भिरुन्नेयम्; यतोऽवयवापे-क्षया जघन्यमध्यमोत्कृष्टास्तिस्रः कथा भवन्ति । तत्र हेतुप्रतिपादनमात्रं जघन्या । द्व्याद्यवयवनिवेदनं मध्यमा । संपूर्णदशावयवकथनमुत्कृष्टा । तत्रेह मध्यमायाः साक्षात् कथनेन जघन्योत्कृष्टे अर्थतः सूचयति, तत्सद्भावस्य प्रमाणसिद्धत्वा-दिति ॥ २० ॥

एवं पक्षादिलक्षणं प्रतिपाद्येदानीं हेयज्ञाने सत्युपादेयं विविक्ततरं वेद्यते इति तद्व्युदस्ताः पक्षहेतुदृष्टान्ताभासा वक्तव्याः । तत्र तावत् पक्षलक्षणव्युदस्तान् पक्षाभासानाह —

प्रतिपाद्यस्य यः सिद्धः पक्षाभासोऽस्ति लिङ्गतः ।
लोकस्ववचनाभ्यां च बाधितोऽनेकधा मतः ॥ २१ ॥

पक्षस्थानोपन्यस्तत्वात् तत्कार्याकरणत्वाच्च पक्षवदाभासत इति पक्षाभासः । असावनेकधा अनेकप्रकारो मत इति संबन्धः । कथमित्याह– प्रतिपाद्यस्य प्रतिवा-दिनो यः कश्चित् सिद्धः प्रतीतावारूढ एव स पक्षाभासः, साधयितुमेव पक्षत्वात्, सिद्धस्य साधनानर्हत्वाद्, अतिप्रसक्तेः । तथा अक्षलिङ्गतोऽध्यक्षहेतुभ्यां लोकस्ववच-नाभ्यां च बाधितस्तिरस्कृतो यः स पक्षाभासः । तत्र प्रतिपाद्यसिद्धो यथा–पौद्ग-लिको घटः, सौगतं वा प्रति सर्वं क्षणिकमित्यादि । प्रत्यक्षबाधितो यथा– निरंशानि स्वलक्षणानि, परस्परविविक्तौ वा सामान्यविशेषाविति । अनुमानबाधितो यथा– नास्ति सर्वज्ञ इति । लोकबाधितो यथा–गम्या माता इति । स्ववचनबाधितो यथा– न सन्ति सर्वे भावा इति ॥ २१ ॥

---

तद्व्युदस्ता इति । पक्षादिलक्षणरहिताः । अध्यक्षहेतुभ्यामिति । हेतुर्लिङ्गं, कारणे कार्योपचारात्; तत्प्रभवं ज्ञानमपि हेतुरनुमानमित्यर्थः । अनुमानबाधित इति । तच्च क्वचिदसर्वज्ञे सर्वज्ञशब्दो मुख्यसर्वज्ञापेक्षः, गौणत्वात्, माणवकेऽग्निशब्दवत्, यद्वा

सांप्रतं हेतुलक्षणं स्मारयन् तदपास्तान् हेत्वाभासानाह--

अन्यथानुपपन्नत्वं हेतोर्लक्षणमीरितम्
तदप्रतीतिसंदेहविपर्यासैस्तदाभता ॥ २२ ॥

हेतोर्लक्षणमसाधारणधर्मरूपं यदीरितं गमितम्, अनेकार्थत्वाद् धातोः प्रतिपादितं, स्वार्थानुमानप्रस्तावे यदुतान्यथानुपपन्नत्वमिति, तस्याप्रतीतिरनध्यवसायः, संदेहो दोलायमानता, विपर्यासो वैपरीत्यनिर्णयः, अप्रतीतिश्च संदेहश्च विपर्यासश्चेति द्वन्द्वः, पश्चात् तदा सह तत्पुरुषः, तैस्तदप्रतीतिसंदेहविपर्यासैः, तदाभता आभानमाभा तस्यैव सम्यग्हेतोरिवाभा अस्येति तदाभस्तद्भावः तत्ता, हेत्वाभासता भवतीत्यर्थः ॥ २२ ॥

अधुना येन लक्षणेन यन्नामा हेत्वाभासो भवति तद्दर्शयति--

असिद्धस्त्वप्रतीतो यो योऽन्यथैवोपपद्यते ।
विरुद्धो योऽन्यथाप्यत्र युक्तोऽनैकान्तिकः स तु ॥ २३ ॥

यः कश्चिदप्रतीतः प्रतीत्या अगोचरीकृतोऽनिश्चितः सोऽसिद्धनामा हेत्वाभासः। तुशब्दः त्रयस्यापि भेदोद्द्योतकः। यस्त्वन्यथैव साध्यं विनैव, विपक्ष एवेति यावत्, उपपद्यते संभवति स विरुद्धाभिधानः । यः पुनरन्यथाऽपि साध्यविपर्ययेणापि युक्तो घटमानकः, अपिशब्दात् साध्येनापि, सोऽत्र व्यतिकरे अनैकान्तिकसंज्ञो ज्ञातव्य इति । तत्र प्रतिप्राणिप्रसिद्धप्रमाणप्रतिष्ठितानेकान्तविरुद्धबुद्धिभिः कणभक्षाक्षपाद-

---

ज्ञानतारतम्यं क्वचिद्विश्रान्तम्, तारतम्यत्वात्, आकाशपरिमाणतारतम्यवत्, यत्रैतद्विश्रान्तं स सर्वज्ञः । तथा सदसद्वर्गः कस्यचिदेकज्ञानालम्बनः, अनेकत्वात्, पञ्चाङ्गुलवत्। तथा कश्चिदात्मा सर्वार्थसाक्षात्कारी, तद्ग्रहणस्वभावत्वे सति प्रक्षीणप्रतिबन्धकत्वात्, यथा अपगततिमिरादिप्रतिबन्धं चक्षुर्ज्ञानं रूपसाक्षात्कारि । एवं ज्ञानं क्वचिदात्मनि प्रकर्षवत्, स्वावरणह्रान्युत्कर्षे सति प्रकाशात्मकत्वात्, चक्षुर्दीपादिवत्, स्वावरणह्रान्युत्कर्षस्तु आवरणहानिः क्वचिज्जीवे परमकाष्ठाप्राप्ता, प्रकर्षत्वात्, परिमाणवदित्यनुमानात् ॥ २१ ॥

तस्येत्यादि । तस्यान्यथानुपपन्नत्वस्य । इहायं भावार्थः- विद्यमाने हेतावन्यथानुपपन्नत्वस्य संदेहे अनैकान्तिकता, विपर्यासे विरुद्धता, तस्मात् परिशेष्यात् अत्र हेतोरसत्तायां संदेहे वान्यथानुपपन्नत्वस्याप्रतीतिः । तथा चासिद्धत्वलक्षणमन्यत्र- असत्सत्तानिश्चयोऽप्रसिद्ध इति असन्तौ सत्तानिश्चयौ यस्येति विग्रहः, अत एवाग्रेतनकारिकायां सूत्रकारोऽपि वक्ष्यति---असिद्धस्त्वप्रतीतो य इति । दोलायमानतेति । दोलोऽन्दोलकः, उभयपक्षगामित्वेन तद्वदाचरन् संदेहोऽपि दोलायमानस्तस्य भावः तत्ता ॥ २२ ॥

व्यतिकरे इति । प्रस्तावे । कणभक्षेत्यादि । कणभक्षकः कणादापरनामा वैशेषिकः, अक्षपादो नैयायिकानामाद्याचार्यवर्यः, बुद्धः सुगतः, आदिशब्दात् सांख्यादिपरिग्रहः, तेषां

बुद्धादिशिष्यकैरुपन्यस्यमानाः सर्वे एव हेतवः, तद्यथा– एकान्तेन अनित्यः शब्दो नित्यो वा, सत्त्वात्, उत्पत्तिमत्त्वात्, कृतकत्वात्, प्रत्यभिज्ञायमानत्वात्– इत्यादयो विवक्षयासिद्धविरुद्धानैकान्तिकतां स्वीकुर्वन्ति इत्यवगन्तव्यम्। तथा हि– अनित्यैकान्ते तावदसिद्धाः सर्वे एव हेतवः, चाक्षुषत्ववत् तेषां ध्वनावविद्यमानत्वात्, असदादिव्यवच्छेदेनालीकसंवृति विकल्पितत्वात्, पारमार्थिकत्वे त्वेकस्यानेकरूपापत्त्यानेकान्तवादापत्तेः, कल्पनारचितसत्ताकानां च सर्वशक्तिविरहरूपतया निःस्वभावत्वात्, तथापि तेषां साधनत्वे साध्यमपि निःस्वभावमिति खरविषाणं शशविषाणस्य साधनमापद्यत इति शोभनः साध्यसाधनव्यवहारः। सर्व एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन न बहिः सदसत्त्वमपेक्षते, तेनायमदोष इति चेत्, एवं तर्हि चाक्षुषत्वमपि शब्दे बुद्ध्याध्यारोप्य हेतुतयोच्यमानं नासिद्धतयोद्भावनीयम्, विशेषाभावात्। अचाक्षुषत्वव्यवच्छेदेन चाक्षुषत्वं बुद्ध्याध्यारोपयितुं पार्यते, न यथा कथंचित्, न चासौ शब्देऽस्ति, अचक्षुर्ग्राह्यत्वात् तस्य, तेनायमदोष इति चेत्, कोऽयमचाक्षुषत्वव्यवच्छेदो नाम, व्यवच्छेदमात्रं नीरूपं व्यवच्छिन्नं वा स्वलक्षणं, व्यवच्छेदिका वा बुद्धिः स्वांशमग्नापि बहिर्वस्तुग्रहणरूपतया प्लवमाना, नापरो वस्तुधर्मो यत्र भेदाभेदविकल्पद्वारेण दूषणं दित्सुर्भवानिति चेत्, तर्हि स शब्दे नास्ति इति कैषा भाषा, एवं हि नभःपुण्डरीक तत्र नास्तीति सत्त्वादिकमपि कल्पयितुं न शक्यमिति प्रसज्येत। किं च। ते साधनधर्मा धर्मिणि भवन्तोऽपि न भवद्दर्शने प्रतीतिमारोहन्ति, प्रत्यक्षस्य विकल्पविकलतया धर्मनिर्णयशून्यत्वात्, तदुत्तरकालभाविन्या वासनाबोधजन्याया विकल्पबुद्धेः स्वांशग्रहणपर्यवसितशरीरत्वेन

कुत्सिता अल्पा वा शिष्याः शिष्यकाः प्रशस्तपादोद्द्योतकरधर्मकीर्तीश्वरकृष्णादयस्तैः। **सत्त्वादित्यादि**। यथासम्भव नित्यानित्यत्वयोरमी हेतवो योज्याः। तथा हि– सत्त्वं स्वाभिप्रायेणानित्यत्वे च साध्ये हेतुः, उत्पत्तिमत्त्वं कृतकत्वं चानित्यत्वे एव, प्रत्यभिज्ञायमानत्वं तु नित्यत्वे एवेति। **असदादीति**। आदिशब्दादनुत्पन्नत्वादिपरिग्रहः। अनिरूपिततत्त्वार्था प्रतीतिः संवृतिर्मता। सा च यद्यपि सर्वापि अलीकैव, तथापि अलीकेति स्वरूपविशेषणम्। यथा—एकान्तसुखदा मुक्तिरिति। **असाविति** अचाक्षुषत्वव्यवच्छेदः। **व्यवच्छेदमात्रमित्यादि**। अमुना विकल्पत्रयेण चेच्छब्दपर्यन्तेन जैन एव बौद्धाभिप्रायमाशङ्कते। **नीरूपं** तुच्छम्। **स्वलक्षणं** घटादि। अयं घटादिरचाक्षुषो न भवति, इति घटादिकमचाक्षुषेभ्यो व्यवच्छेदयन्ती विकल्पिका बुद्धिः स्वांशमग्नापि सर्वचित्तचैत्तानामात्मसंवेदनमिति स्वज्ञानाद्वा ग्राहिकापि वस्तुतो वस्तुनि विकल्पानामसंभवः, तथापि अनुभवादिजन्यत्वेन बहिरर्थग्राहकतया स्वलक्षणजलस्योपरि तरन्ती। **स इति**। त्रिविधोऽपि अचाक्षुषत्वव्यवच्छेदः। **कैषा भाषेति**। किम आक्षेपकत्वात् अकिंचित्कारीत्यर्थः। अकिंचित्करत्वमेवातिप्रसङ्गद्वारेण व्यनक्ति—**एवं हीत्यादि**। यथा गगनेन्दीवरं शब्दे नास्तीति सत्त्वादिकमपि तत्र मा

बहिः स्वलक्षणे प्रवेशाभावात्, ततश्चाप्रतीतत्वात् सर्वस्यासिद्धत्वम्। नित्यैकान्तेऽपि धर्मिणोऽत्यन्तव्यतिरिक्तानामपारमार्थिकानां वा स्वसाधनधर्माणां प्रमाणेनाप्रतीतत्वादसिद्धता द्रष्टव्या, धर्मिणोऽविनिर्लुठितरूपाणां पारमार्थिकानां सकलधर्माणां प्रत्यक्षादिप्रमाणप्रसिद्धत्वेन निह्नोतुमशक्यत्वादिति। तथा विरुद्धतापि पक्षद्वयेऽपि सर्वसाधनधर्माणामुन्नेया, अनेकान्तप्रतिबद्धस्वभावत्वेन तत्साधनप्रवणत्वात्। एतच्चोत्तरे वक्ष्यामः। एवं पक्षद्वयेऽपि निर्दिश्यमानाः सर्व एव हेतवोऽनैकान्तिकतामात्मसात्कुर्वन्ति, परस्परविरुद्धाव्यभिचारितत्वात्, समानयुक्त्युपन्यासेन विपक्षेऽपि दर्शयितुं शक्यत्वात्। तथा हि–अनित्यवादी नित्यवादिनं प्रति प्रमाणयति– सर्वं क्षणिकम्, सत्त्वात्, अक्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्, अर्थक्रियाकारित्वस्य च भावलक्षणत्वात्, ततोऽर्थक्रिया व्यावर्तमाना स्वक्रोडीकृतां सत्तां व्यावर्तयेदिति क्षणिकत्वसिद्धिः। न हि नित्योऽर्थोऽर्थक्रियायां क्रमेण प्रवर्तितुमुत्सहते, पूर्वार्थक्रियाकरणस्वभावोपमर्दद्वारेणोत्तरक्रियायां प्रवृत्तेः, अन्यथा पूर्वार्थक्रियाकरणाविरामप्रसङ्गात्, तत्स्वभावप्रच्यवे च नित्यता अपयाति, अतादवस्थ्यस्यानित्यलक्षणत्वात्। नित्योऽपि क्रमवर्तिनं सहकारिकारणमर्थमुदीक्षमाणस्तावदासीत्, पश्चात् तमासाद्य क्रमेण कार्यं कुर्यादिति चेत्, न, सहकारिकारणस्य नित्येऽकिंचित्करत्वात्, अकिंचित्करस्यापि प्रतीक्षणेऽनवस्थाप्रसङ्गात्। नापि यौगपद्येन नित्योऽर्थोऽर्थक्रियां कुरुते, अध्यक्षविरोधात्। न ह्येककालं सकलाः क्रियाः प्रारभमाणः कश्चिदुपलभ्यते, करोतु वा, तथाप्याद्यक्षणे एव सकलक्रियापरिसमाप्तेर्द्वितीयादिक्षणेष्वकुर्वाणस्यानित्यता बलादाढौकते, करणाकरणयोरेकस्मिन् विरुद्धत्वादिति। नित्यवादी पुनरेवं प्रमाणयति– सर्वं नित्यम्, सत्त्वात्, क्षणिके सदसत्कालयोरर्थक्रियाविरोधात्, तल्लक्षणं सत्त्वं नावस्थां बध्नातीति ततो निवर्तमानमनन्यशरणतया नित्यत्वं साधयति। तथा हि– क्षणिकोऽर्थः सद् वा कार्यं कुर्यात्, असद् वा, गत्यन्तराभावात्। न तावदाद्यः पक्षः, समसमयवर्तिनि व्यापारायोगात्, सकलभावानां परस्परं कार्यकरणभावप्राप्त्यातिप्रसङ्गाच्च। नापि द्वितीयः पक्षः क्षोदं क्षमते, असतः कार्यकरणशक्तिविकलत्वात्, अन्यथा शशविषाणादयोऽपि कार्यकरणायोत्सहेरन्, विशेषाभावादिति। तदेवमेकान्तद्वयेऽपि ये ये हेतवस्ते ते युक्तेः समानतया विरुद्धं न व्यभिचरन्ति, अविचारितरमणीयतया मुग्धजनध्यान्ध्यं चोत्पादयन्तीति विरुद्धाव्यभिचारिणोऽनैकान्तिकाः, सर्ववस्तुधर्माणां वस्तुतोऽनेकान्तप्रतिबद्धत्वादिति। तस्मादमी सर्वे एव हेतवः

---

भूदिति न किंचित्। एवं तुच्छं व्यवच्छेदमात्रं सर्वथा भिन्नं स्वलक्षणं वस्त्वसंस्पर्शिनी विकल्पबुद्धिश्च शब्दे नास्तीति चाक्षुषत्वमपि तत्र न इत्यप्यसारमेवेति भावः। **नित्यैकान्त इत्यादि।** **धर्मिणोऽत्यन्तव्यतिरिक्तानामिति** नैयायिकवैशेषिकाभिप्रायेण। **अपारमार्थिकानां वेति** अद्वैतवाद्यभिप्रायेण। **ततोऽर्थक्रिया व्यावर्तमानेत्यादि।** अक्षणिका-

सन्तोऽनेकान्तमन्तरेण नोपपद्यन्ते, इति तमेव प्रतिपादयितुमीशते । विमूढबुद्धिभिः पुनः विपक्षसाधनार्थमुपन्यस्यमाना विवक्षयासिद्धविरुद्धानैकान्तिकतामाबिभ्रतीति स्थितम् ॥ २३ ॥

तदेवं हेत्वाभासान् प्रतिपाद्य दृष्टान्तलक्षणव्युदस्तान् दृष्टान्ताभासानाह—

साधर्म्येणात्र दृष्टान्तदोषा न्यायविदीरिताः।
अपलक्षणहेतूत्थाः साध्यादिविकलादयः ॥ २४ ॥

साधनं साध्याक्रान्तमुपदर्शयितुमभिप्रेतं यस्मिंस्तत् साधर्म्यम् तेन, अत्र व्यतिकरे, दूष्यन्त इति दोषाः, दृष्टान्ता एव दोषाः दृष्टान्तदोषाः, दृष्टान्ताभासा इत्यर्थः, न्यायविदीरिता विद्वद्भिर्गदिताः । साध्यं गम्यम्, आदिशब्दात् साधनोभयपरिग्रहः, तद्विकलास्तच्छून्याः, आदिशब्दात् संदिग्धसाध्यसाधनोभयधर्मा गृह्यन्ते। किंभूता एते इत्याह– अपगतं लक्षणं येभ्यस्ते तथा च ते हेतवश्च तेभ्य उत्थानं येषां तेऽपलक्षणहेतूत्थाः । इदं च प्रायिकं विशेषणम्, सम्यग्हेतावपि वक्तृदोषवशात् दृष्टान्ताभासतोपपत्तेः। यथा–नित्यानित्यः शब्दः, श्रावणत्वात् घटवदित्यादि। तत्र साध्यविकलो यथा– भ्रान्तमनुमानम्, प्रमाणत्वात्, प्रत्यक्षवत् । प्रत्यक्षस्य भ्रान्तताविकलत्वात्, तद्भ्रान्तत्वे सकलव्यवहारोच्छेदप्रसङ्गात्, तदुच्छेदे च प्रमाणप्रमेयाभावात् न किंचित् केनचित् साध्यत इति भ्रान्तवादिनो मूकतामापद्येत। साधनविकलो यथा–जाग्रत्संवेदनं भ्रान्तम्, प्रमाणत्वात् स्वप्नसंवेदनवत्। स्वप्नसंवेदनस्य प्रमाणताविकल्यात् तत्प्रत्यनीकजाग्रत्प्रत्ययोपनिपातबाधितत्वादिति। उभयविकलो यथा– नास्ति सर्वज्ञः, प्रत्यक्षाद्यनुपलब्धत्वात्, घटवत्। घटस्य सत्त्वात् प्रत्यक्षादिभिरुपलब्धत्वाच्च । संदिग्धसाध्यधर्मो यथा-- वीतरागोऽयम्, मरणधर्मत्वात् रथ्यापुरुषवत्। रथ्यापुरुषे वीतरागत्वस्य संदिग्धत्वात्, विशिष्टचेतोधर्माणां

---

क्रमयौगपद्यनिवृत्त्यार्थक्रियाकारित्वं वर्तमानं सत्त्वव्याप्त सत्त्वं निवर्तयति । ननु चार्थक्रियासामर्थ्यमेव सत्त्वं नान्यत्, तथा च ज्ञानश्रीः– "यदि नाम प्रतिदर्शनं सत्त्वभेदस्तथाऽपीहार्थक्रियासामर्थ्यमेव सत्त्वमभिप्रेतमिति," ततश्चार्थक्रियासामर्थ्यसत्त्वयोर्घटकुम्भयोरिव व्यावृत्तिकृतस्य भेदस्याभावात् कथं व्याप्यव्यापकभावः । उच्यते, कारणस्य कार्यात्प्राग्भावित्वमर्थक्रियासामर्थ्यं भवनधर्मकत्वमात्रं तु सत्त्वमिति व्यक्तो व्यावृत्तिकृतो भेदः । यत्तूक्तम्– अर्थक्रियासामर्थ्यमेव सत्त्वमिति, तदर्थक्रियासामर्थ्यव्यभिचारित्वात् सत्त्वस्येति ॥ २३ ॥

**संदिग्धसाध्यधर्मेति** । संदिग्धश्चासौ साध्यश्च संदिग्धसाध्यः संदिग्धसाध्यो धर्मो यस्येति बहुव्रीहिः, न पुनः संदिग्धः साध्यो धर्मो यस्येति संदिग्धः साध्यधर्मो यस्येति वा, धर्मादन् वा केवलात् इत्यनेन केवलात्पदात्परो यः केवलो धर्मशब्दः तस्मादनो विधानात्। एवं संदिग्धसाधनधर्मादिष्वपि वाच्यम् । **व्याहारादीति** । आदिशब्दाच्चेष्टाकारपरिग्रहः । **तन्निर्णयस्येति । विशिष्टव्यापारादिलिङ्गनिश्चयस्येत्यर्थः** ॥ २४ ॥

विशिष्टव्याहारादिलिङ्गगम्यत्वात् रथ्यापुरुषे तन्निर्णयस्याप्यभावादिति। संदिग्धसाधनधर्मो यथा-- मरणधर्मायं पुरुषः, रागादिमत्त्वात्, रथ्यापुरुषवत्। रथ्यापुरुषे रागादिमत्त्वस्य संदिग्धत्वात्, वीतरागस्यापि तथा संभवादिति। संदिग्धोभयधर्मो यथा-- असर्वज्ञोऽयम्, रागादिमत्त्वात्, रथ्यापुरुषवत्। रथ्यापुरुषे प्रदर्शितन्यायेनोभयस्यापि संदिग्धत्वादिति। ननु च परैरन्यदपि दृष्टान्ताभासत्रयमुक्तम्, तद्यथा— अनन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति। तत्रानन्वयो यथा- रागादिमान् विवक्षितः पुरुषः, वक्तृत्वाद्, इष्टपुरुषवदिति। यद्यपि किलेष्टपुरुषे रागादिमत्त्वं वक्तृत्वं च साध्यसाधनधर्मौ दृष्टौ, तथापि यो यो वक्ता स स रागादिमानिति व्याप्त्यसिद्धेरनन्वयोऽयं दृष्टान्तः। तथा अप्रदर्शितान्वयो यथा- अनित्यः शब्दः, कृतकत्वात्, घटवदिति। अत्र यद्यपि वास्तवोऽन्वयोऽस्ति, तथापि वादिना वचनेन न प्रकाशित इत्यप्रदर्शितान्वयो दृष्टान्तः। विपरीतान्वयो यथा- अनित्यः शब्दः, कृतकत्वादिति हेतुमभिधाय यदनित्यं तत् कृतकं घटवदिति विपरीतव्याप्तिदर्शनात् विपरीतान्वयः। साधर्म्यप्रयोगे हि साधनं साध्याक्रान्तमुपदर्शनीयम्, इह तु विपर्यासदर्शनाद्विपरीतता। तदेतद् भवद्भिः कस्मान्नोक्तमिति। अत्रोच्यते, परेषां न सुपर्यालोचितमेतद् दृष्टान्ताभासत्रयाभिधानमिति ज्ञापनार्थम्। तथा हि—न तावदनन्वयो दृष्टान्ताभासो भवितुमर्हति। यदि हि दृष्टान्तबलेन व्याप्तिः साध्यसाधनयोः प्रतिपाद्येत, ततः स्यादनन्वयो दृष्टान्ताभासः, स्वकार्याकरणात्, यदा तु पूर्वप्रवृत्तसंबन्धग्राहिप्रमाणगोचरस्मरणसंपादनार्थं दृष्टान्तोदाहृतिरिति स्थितम्, तदानन्वयलक्षणो न दृष्टान्तस्य दोषः, किं तर्हि हेतोरेव, प्रतिबन्धस्याद्यापि प्रमाणेनाप्रतिष्ठितत्वात्, प्रतिबन्धाभावे चान्वयासिद्धेः। न च हेतुदोषोऽपि दृष्टान्ते वाच्यः, अतिप्रसङ्गादिति। तथा अप्रदर्शितान्वयविपरीतान्वयावपि न दृष्टान्ताभासतां स्वीकुरुतः, अन्वयाप्रदर्शनस्य विपर्यस्तान्वयप्रदर्शनस्य च वक्तृदोषत्वात्, तद्दोषद्वारेणापि दृष्टान्ताभासप्रतिपादने तदियत्ता विशीर्येत, वक्तृदोषाणामानन्त्यात्। वक्तृदोषत्वेऽपि परार्थानुमाने तत्कौशलमपेक्षत इति। एवं चोपन्यासे न बुभुत्सितार्थसाधकौ अतो दृष्टान्ताभासावेताविति चेत्, एवं तर्हि करणापाटवादयोऽपि दृष्टान्ताभासा वाच्याः। तथा हि- करणपाटवव्यतिरेकेणापि न परप्रत्यायनं समस्ति, विस्पष्टवर्णाग्रहणे व्यक्ततया तदर्थावगमाभावादित्यास्तां तावत् ॥ २४ ॥

तदेवं साधर्म्येण दृष्टान्ताभासान् प्रतिपाद्य वैधर्म्येणाह—

**वैधर्म्येणात्र दृष्टान्तदोषा न्यायविदीरिताः।**
**साध्यसाधनयुग्मानामनिवृत्तेश्च संशयात् ॥ २५ ॥**

साध्याभावः साधनाभावव्याप्तौ दर्शयितुमभिप्रेतो यस्मिन् तद् वैधर्म्यम्, तेनात्र दृष्टान्तदोषा न्यायविदीरिता इति दृत्तार्थम्। साध्यसाधनयुग्मानां गम्यगमको-

भयानां अनिवृत्तेरनिवर्तनात्, चशब्दस्य व्यवहितप्रयोगत्वात् संशयाच्च, निवृत्तिसंदेहाच्चेत्यर्थः। तदनेन षड् दृष्टान्ताभासाः सूचिताः। तद्यथा– १, साध्याव्यतिरेकी; २, साधनाव्यतिरेकी; ३, साध्यसाधनाव्यतिरेकी; तथा ४, संदिग्धसाध्यव्यतिरेकः; ५, संदिग्धसाधनव्यतिरेकः; ६, संदिग्धसाध्यसाधनव्यतिरेकश्चेति। तत्र साध्यव्यतिरेकी यथा– भ्रान्तमनुमानं प्रमाणत्वाद्– इति। अत्र वैधर्म्यदृष्टान्तः– यत् पुनर्भ्रान्तं न भवति न तत् प्रमाणम्, तद्यथा– स्वप्नज्ञानमिति, स्वप्नज्ञानाद् भ्रान्ततानिवृत्तेः साध्याव्यतिरेकित्वमिति। साधनाव्यतिरेकी यथा– निर्विकल्पकं प्रत्यक्षं प्रमाणत्वादिति। अत्र वैधर्म्यदृष्टान्तः— यत् पुनः सविकल्पकं न तत् प्रमाणम्, तद्यथानुमानम्, अनुमानात् प्रमाणतानिवृत्तेः साधनाव्यतिरेकित्वम्। उभयाव्यतिरेकी यथा– नित्यानित्यः शब्दः सत्त्वादिति। अत्र वैधर्म्यदृष्टान्तः– यः पुनर्न नित्यानित्यः स न सन्, तद्यथा घटः, घटादुभयस्याप्यव्यावृत्तेरुभयाव्यतिरेकित्वमिति। तथा संदिग्धसाध्यव्यतिरेको यथा– असर्वज्ञा अनाप्ता वा कपिलादयः आर्यसत्यचतुष्टयाप्रतिपादकत्वादिति। अत्र वैधर्म्यदृष्टान्तः- यः पुनः सर्वज्ञ आप्तो वा असावार्यसत्यचतुष्टयं प्रत्यपीपदत्, तद्यथा शौद्धोदनिरिति। अयं च साध्याव्यतिरेकी वा, आर्यसत्यचतुष्टयस्य दुःखसमुदयमार्गनिरोधलक्षणस्य प्रमाणबाधितत्वेन तद्भाषकस्यासर्वज्ञतानाप्ततोपपत्तेः, केवलं तन्निराकारकप्रमाणसामर्थ्यपर्यालोचनविकलानां संदिग्धसाध्यव्यतिरेकतया प्रतिभाति इति तथोपन्यस्तः। तथा हि– यद्यप्यार्यसत्यचतुष्टयं शौद्धोदनिः प्रतिपादितवान्, तथापि सर्वज्ञताप्तते तस्य न सिध्यतः, ताभ्यां सहार्यसत्यचतुष्टयप्रतिपादनस्यान्यथानुपपत्त्यसिद्धेः, असर्वज्ञानाप्तेनापि परप्रतारणाभिप्रायप्रवृत्तनिपुणबुद्धिशठपुरुषेण तथाविधप्रतिपादनस्य कर्तुं शक्यत्वात्। तस्मात् शौद्धोदनेः सकाशादसर्वज्ञतानाप्ततालक्षणस्य साध्यस्य व्यावृत्तिः संदिग्धेति संदिग्धसाध्यव्यतिरेकित्वमिति। संदिग्धसाधनव्यतिरेको यथा– अनादेयवाक्यः कश्चिद् विवक्षितः पुरुषः रागादिमत्त्वादिति। अत्र वैधर्म्यदृष्टान्तः — यः पुनरादेयवाक्यो

---

**आर्यसत्यचतुष्टयमिति**। आराद् दूरं यान्ति पापादित्यार्याः, निरुक्तलक्षणं, तेषां सतां साधूनां पदानां वा यथासंभवं मुक्तिप्रापकत्वेन यथावस्थितवस्तुस्वरूपचिन्तनेन च हितानि सत्यानि तत्त्वानीत्यर्थः, तेषां चतुष्टयम्। **दुःखेत्यादि**। दुःखं फलभूताः पञ्चोपादानस्कन्धाः — रूप वेदना संज्ञा संस्कारो विज्ञानमेव चेति; ते एव तृष्णासहाया हेतुभूताः समुदयः, समुदेति स्कन्धपञ्चकलक्षण दुःखमस्मादिति व्युत्पत्तितः। निरोधहेतुर्नैरात्म्याद्याकारचित्तविशेषो मार्गः, 'मार्ग अन्वेषणे', मार्ग्यतेऽन्विष्यते याच्यते निरोधार्थिभिरिति चुरादीनन्तत्वेन स्वरान्तत्वादल्प्रत्ययः। निष्क्लेशावस्था चित्तस्य निरोधः, निरुध्यते रागद्वेषोपहतचित्तलक्षणः संसारोऽनेनेति करणे घञि मुक्तिरित्यर्थः। एतच्च दुःखादिरूपं, विस्तरार्थिना प्रमाणविनिश्चयटीकादेर्निरीक्षणीयम्। **प्रमाणबाधितत्वेनेति**। दुःखादीनां हि मूलमात्मा,

न स रागादिमान्, तद्यथा सुगत इति । यद्यपि तद्दर्शनानुरक्तान्तःकरणानां सुगतस्यादेयवचनता सिद्धिसौधमध्यारूढा, तथापि रागादिमत्त्वाभावस्तत्प्रतिपादकप्रमाणवैधुर्यात् संदेहगोचरचारितामनुभवति, अतः सुगताद् रागादिमत्ताव्यावृत्तिसंशयात् संदिग्धसाधनव्यतिरेकित्वमिति । संदिग्धसाध्यसाधनव्यतिरेको यथा- न वीतरागाः कापिलादयः करुणास्पदेष्वप्यकरुणापरीतचित्ततयादत्तनिजकमांसशकलत्वादिति। अत्र वैधर्म्यदृष्टान्तः- ये पुनर्वीतरागास्ते करुणापरीतचित्ततया दत्तनिजमांसशकलाः, तद्यथा बोधिसत्त्वा इति । अत्र साध्यसाधनधर्मयोर्बोधिसत्त्वेभ्यो व्यावृत्तिः संदिग्धा, तत्प्रतिपादितप्रमाणवैकल्याद् न ज्ञायते किं ते रागादिमन्तः उत वीतरागाः, तथानुकम्प्येषु किं स्वपिशितखण्डानि दत्तवन्तो नेति वा, अतः संदिग्धसाध्यसाधनव्यतिरेकित्वमिति । परैरपरेऽपि दृष्टान्ताभासास्त्रयो विमृश्यभाषितया दर्शिताः । तद्यथा- अव्यतिरेकः, अप्रदर्शितव्यतिरेकः, विपरीतव्यतिरेकश्चेति, तेऽस्माभिरयुक्तत्वान्न दर्शयितव्याः । तथा हि— अव्यतिरेकस्तैर्दर्शितः, यथा- अवीतरागः कश्चिद् विवक्षितः पुरुषः, वक्तृत्वादिति, अत्र वैधर्म्यदृष्टान्तः- यः पुनर्वीतरागो न स वक्ता, यथोपलखण्ड इति । यद्यपि किलोपलखण्डादुभयं व्यावृत्तम्, तथापि व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकित्वमिति । अयुक्तश्चायं वक्तुम्, अव्यतिरेकिताया हेतुदोषत्वात्। यदि हि दृष्टान्तबलेनैव व्यतिरेकः प्रतिपाद्येत, तदा तथाविधसामर्थ्यविकलस्य तदाभासता युज्येत, न चैतदस्ति, प्राक्प्रवृत्तसंबन्धग्रहणप्रवणप्रमाणगोचरस्मरणसंपादनार्थं दृष्टान्तोपादानात्; न ह्येकत्र यो यदभावे न दृष्टः स तदभावे न भवतीति प्रतिबन्धग्राहिप्रमाणव्यतिरेकेण सिध्यति, अतिप्रसङ्गात्: तस्मादसिद्धप्रतिबन्धस्य हेतोरेवायं दोषो न दृष्टान्तस्येति । तथाप्रदर्शितव्यतिरेकविपरीतव्यतिरेकावपि वक्तुमयुक्तौ, तयोर्वक्तृदोषत्वात् । तथा हि- अप्रदर्शितव्यतिरेकस्तैरुक्तः, यथा- नित्यः शब्दः कृतकत्वादाकाशवत्- इति। अत्र विद्यमानोऽपि व्यतिरेको वादिना वचनेन नोद्भावित इति दुष्टता । विपरीतव्यतिरेकः पुनरभिहितः, यथा- अनित्यः शब्दः कृतकत्वादिति। अत्र वैधर्म्यदृष्टान्तः- यदकृतकं तन्नित्यं भवति, यथा आकाशमिति, अत्र विपर्यस्तव्यतिरेकप्रदर्शनाद्विपरीतव्यतिरेकित्वम्, वैधर्म्यप्रयोगे हि साध्याभावः साधनाभावाक्रान्तो दर्शनीयः, न चैवमत्र, साधनाभावस्य साध्याभावव्याप्ततयाभिधानादिति। व्यतिरेकाप्रदर्शनं विपरीतव्यतिरेकप्रदर्शनं च न

---

तदभावे कथं तेषां संभवः। तथा हि- दुःखं नाम देहधर्मविलक्षणोऽन्तःसंवेद्यो धर्मः, धर्माश्च धर्मिणमन्तरेण न भवन्ति, रूपादय इव घटम्, नास्ति च बौद्धादीनां दुःखादिधर्मानुगुणो जीवः, मुख्यदुःखाभावे च दुःखहेतुत्वात् दुःखं संसारिणः स्कन्धा अपि न स्युः तदभावे च न हेतुः । एवं मार्गनिरोधयोरपि प्रमाणबाधितत्वमपि भावनीयमिति । उपलखण्ड इति। खण्डध्वनिः पुंनपुंसकः ॥ २५ ॥

वस्तुनो दोषः, किं तर्हि वचनकुशलताविकलस्याभिधायकस्य । किं च येषां भवतामदो दर्शनम्- यदुत स्वार्थानुमानकाले स्वयं हेतुदर्शनमात्रात् साध्यप्रतीतेः परार्थानुमानावसरेऽपि हेतुप्रतिपादनमेव कर्तव्यम्, "विदुषां वाच्यो हेतुरेव हि केवलः"- इति वचनात्, तेषां कृतकत्वाद् इतीयता हेतूपन्यासेनैव सिसाधयिषितसाध्यसिद्धेः समस्तदृष्टान्ताभासवर्णनमपि पूर्वापरव्याहतवचनरचनाचातुर्यमाविर्भावयति । आसातां तावदेतौ, दृष्टान्तस्य साधनावयवत्वेनानभ्युपगमात् । अथेत्थमाचक्षीथाः- अन्वयव्यतिरेकापरिज्ञाने प्रतिपाद्यस्य न दृष्टान्तमन्तरेणैतौ दर्शयितुं शक्यौ, अतोऽन्वयव्यतिरेकदर्शनार्थं दृष्टान्तोऽभिधातव्यः ततश्च तत्कार्याकारिणां तदाभासतेति चेत्, गले गृहीतस्यायमुल्लापः तथाप्यप्रदर्शितव्यतिरेकविपरीतव्यतिरेकौ दृष्टान्ताभासौ न वास्तवौ, किं तर्हि वक्तृदोषसमुत्थौ, अतो नाभिधातुं युक्तौ, तथाविधस्य विद्यमानवस्तुप्रकाशनसामर्थ्यरहितस्य निबिडजडिमावष्टब्धस्य पुंसो वादानधिकारित्वाद्, मातृकापाठशालायोग्यतया विदुषां वादयितुमयुक्तत्वादिति ॥ २५ ॥

तदेवं परार्थानुमानं व्याचक्षाणेन यदुक्तम्- यदुत तत्पक्षादिवचनात्मकमिति तत्पक्षहेतुदृष्टान्तानां साभासानां प्रतिपादनात् प्रायः पर्यन्तितम्, केवलं तत्परोक्षदूषणोद्धारादेव समीचीनतामाबिभर्ति, इत्यमुना प्रस्तावेन दूषणं साभासमभिधातुकाम आह--

वाद्युक्ते साधने प्रोक्तदोषाणामुद्भावनम् ।
दूषणं निरवद्ये तु दूषणाभासनामकम् ॥ २६ ॥

वदनशीलो वादी प्रत्यायकस्तेनोक्ते उपन्यस्ते, कस्मिन्? साधने, साध्यते प्रतिपाद्यप्रतीतावारोप्यतेऽनुमेयं येन तत्साधनम्। तच्चानेकरूपं प्राक् प्रत्यपादि। तद्यथा क्वचिद्धेतुरेवैकः, क्वचित्पक्षहेतू, क्वचित् पक्षहेतुदृष्टान्ताः, क्वचित्ते एव सोपनयाः, क्वचित् सनिगमनाः, क्वचिदेकैकतच्छुद्धिवृद्धयेति, प्रतिपाद्यस्य क्वचित् कथंचित् प्रत्याययितुं शक्यत्वात्, तत्प्रत्यायनोपायस्य च साधनत्वादिति, तत्रेह सम्यक्साधनस्य दूषयितुमशक्यत्वात्, साधनाभास एव तत्सामर्थ्योपपत्तेः। साधनाभासमेव दूषणोपनिपातात् प्रागवस्थायामनिर्ज्ञातं सामान्येन साधनध्वनिनोक्तम्, तत्र प्रोक्तदोषाणां प्रत्यक्षादिनिराकृतपक्षासिद्धादिहेतुसाध्यादिविकलदृष्टान्ताद्युपन्यास-- लक्षणानामुद्भावनं प्राश्निकानां पुरतः प्रकाशनं यत् तद् दूष्यते- स्वाभिप्रेतसाध्यप्रत्यायनवैकल्यलक्षणं विकृतिं नीयते साधनमनेनेति दूषणमिति ज्ञेयम्। अधुना तदाभासमाह -निर्गतं सम्यक्प्रयुक्तत्वादवद्यं पापं पक्षादिदोषलक्षणं दौष्ट्यमस्मादिति निरवद्यम्, तस्मिन् साधने वादिनोक्ते इति वर्तते, तथापि मत्सरितया प्रमृद्यो-

वदनशीलो वादीति, वदतीति ग्रहादेर्णिन् इति णिन्- अवश्य वदतीति आवश्यकार्थे वा आवश्यकाधमर्ण्ययोर्णिन् इति णिन्। वदनं वादः सोऽस्यास्तीति वा वादी; शीलार्थे

दरं यदविद्यमानानां दोषाणामुद्भावनं तद्दूषणस्थानोपन्यस्तत्वात् तत्कार्याकरणात् सम्यक्साधने दोषोद्भावनस्य प्रलापायमानत्वात् दूषणवदाभासते इति दूषणाभासमिति, तदेव नाम संज्ञा यस्य तत्तथा, समर्थसाधनोपन्यस्तत्वात् साधिते साध्ये सतामप्यपशब्दालंकारादिदोषाणां यदुद्भावनं तदपि दूषणाभासनामकमिति । तुशब्देन विशेषणार्थेन दर्शयति- वस्तुसिद्ध्यर्थं वादप्रवृत्तेः, तस्य सिद्धत्वात्, अपशब्दादीनामप्रस्तुततया तद्द्वारेण दोषप्रकाशनस्यासंबद्धप्रलापरूपत्वात्, इतरथा तावन्मात्रेणैव परापाकरणसिद्धेः समर्थसाधनान्वेषणप्रयत्नो विशीर्येत, प्रयोजनाभावादिति ॥ २६ ॥

तदेवं व्यावहारिकप्रमाणस्य प्रत्यक्षपरोक्षस्वार्थपरार्थादिभेदभिन्नस्य लक्षणं प्रतिपाद्याधुना यैः पारमार्थिकं समस्तावरणविच्छेदलभ्यमशेषार्थगोचरं केवलज्ञानं नाभ्युपगम्यते, तन्मतोद्दलनार्थं तल्लक्षणमभिधित्सुराह—

**सकलावरणमुक्तात्म केवलं यत्प्रकाशते ।**
**प्रत्यक्षं सकलार्थात्मसततप्रतिभासनम् ॥ २७ ॥**

सकलं समस्तमावृणोत्याव्रियते वा अनेनेत्यावरणम्, तत्स्वरूपप्रच्छादनं कर्मेत्यर्थः, सकलं च तदावरणं च सकलावरणं तेन मुक्तो रहितः आत्मा स्वरूपं यस्य तत्तथा, अत एव केवलमसहायं आवरणक्षयोपशमविचित्रतयैव बोधस्य नानाकारतया प्रवृत्तेः, सामस्त्येन पुनरावरणनिर्दलने विबन्धककारणवैकल्यादेकाकारतयैव तस्य विवर्तनात्, अतो ज्ञानान्तरनिरपेक्षं यत् प्रकाशते प्रथते निरुपाधिकं द्योतते इत्यर्थः, तत्परमार्थतः प्रत्यक्षम् । तदिदं सकलावरणमुक्तात्म इति हेतुद्वारेण तथा केवलं यत् प्रकाशते इति स्वरूपतो निरूप्याधुना कार्यद्वारेण निरूपयन्नाह — सकलार्थात्मनां समस्तवस्तुरूपाणां सततप्रतिभासनम् — अनवरतप्रकाशनं सकलार्थात्मसततप्रतिभासनमिति, प्रतिभास्यतेऽनेनेति प्रतिभासनं, आत्मनो धर्मरूपतया भेदवद्विवक्षितं ज्ञानमिति यावत् । अस्य च पारमार्थिकत्वम्, निरुपचरितशब्दार्थोपपत्तेः । तथा हि- अक्षशब्दो जीवपर्यायस्ततश्चाक्षं प्रति वर्तते इति प्रत्यक्षम्, यत्रात्मनः साक्षाद् व्यापारः, व्यावहारिकं पुनरिन्द्रियव्यवहितात्मव्यापारसंपाद्यत्वात् परमार्थतः परोक्षमेव, धूमादग्निज्ञानवत्, तिरोधानाविशेषात् । ननु च प्रसिद्धं लक्ष्यमनूद्याप्रसिद्धं लक्षणं विधीयते, सर्वत्रायं न्यायः, अप्रसिद्धे पुनर्लक्ष्ये लक्षणमभिधीयमानमम्बरारविन्दिनीकुसुमलक्षणवन्निर्गोचरतां यायात्, तदिदं

---

तूपपदाभावेन णिन्प्रत्ययस्यासंभवादर्थकथनमात्रमेतत् । तावन्मात्रेणैवेति । अपशब्दालंकारादिदोषोद्भावनमात्रेणैव । प्रयोजनाभावादिति । समर्थसाधनस्य हि परनिराकरणं प्रयोजनम्, तच्चेदपशब्दादिदोषोद्भावनेनापि चक्रे तदा कृतं वादिदूषणार्थं प्रतिवादिनः समर्थसाधनोपन्यासप्रयासेनेति ॥ २६ ॥

स्वरूपतोऽप्रसाध्य लक्षणमभिदधानस्य कोऽभिप्रायः इति। अत्रोच्यते – ये ये मिथ्यावलेपाध्मातान्तःकरणाः प्रमाणप्रसिद्धमप्यदः प्रति विप्रतिपद्यन्ते, तेषां धान्ध्यीकृतबुद्धित्वादवधारणीयतामनेन दर्शयति। किमस्य प्रतिपादकं प्रमाणमिति चेत्, एते ब्रूमः– समस्ति समस्तवस्तुविचारगोचरं विशददर्शनम्, तद्गोचरानुमानप्रवृत्तेः। इह यद्यद् गोचरमनुमानं प्रवर्तते, तस्य तस्य ग्राहकं किंचित् प्रत्यक्षमुदयपदवीं समासादयति, यथा चित्रभानोः। प्रवर्तते च सकलार्थविषयमनुमानम्, अतस्तदवलोकिना विशददर्शनेनापि भाव्यमिति। सर्वार्थविषयकं किमनुमानं प्रवर्तते इति चेत्। इदमपि ब्रूमः– इह यद्यदस्ति तत् सर्वं स्थित्युदयापवर्गसंसर्गमनुभवति, वस्तुत्वात्, यद्यद्वस्तु तत्तत् स्थेमजन्मप्रलयैः क्रोडीकृतम्। तद्यथा– अङ्गुलिरङ्गुलित्ववक्रत्वर्जुत्वापेक्षयेति, वस्तु च यदस्ति, अतः प्रस्तुतत्रयाक्रान्तं तदवगन्तव्यम्। इदमेव निखिलार्थगोचरमनेकान्तानुमानं ज्ञानक्रियाभ्यासातिशयान्निखिलावरणविच्छेदे विबन्धककारणाभावाद् विशददर्शनीभवति। न चानुमानप्रवृत्तावप्यनर्थित्वादिना प्रमातुरप्रवृत्तौ अनुमेयगोचरप्रत्यक्षासंभवेन व्यभिचारश्चोदनीयः, संभवस्य साध्यतयाभिप्रेतत्वात्। न च संभवमात्रेऽस्ति व्यभिचारः, सर्वानुमेयानां संभवत्प्रत्यक्षतया व्याप्तत्वादिति। अथवान्यथानुमानयामः– संभवत्समस्तशुद्धिक आत्मा, विद्यमानशुद्ध्युपायत्वात्, इह यो यो विद्यमानशुद्ध्युपायः स स संभवत्समस्तशुद्धिकः, यथा विद्यमानक्षारमृत्पुटपाकादिशुद्ध्युपायो रत्नविशेषः, तथा च विद्यमानज्ञानाद्यभ्यासशुद्ध्युपाय आत्मा, अतः संभवत्समस्तशुद्धिक इति। सामस्त्यशुद्धश्चात्मा ज्ञानज्ञानिनोः कथंचिदभेदात् केवलमभिधीयते इति। ज्ञानाद्यभ्यासः कथं विशुद्धिकारणमिति चेत्, आवरणमलप्रतिपक्षरूपत्वादिति ब्रूमः। प्रतिपक्षरूपता कथमवधारिता इति चेत्, तथैव दर्शनात्। तथा हि– दृश्यते ज्ञानाद्यभ्यासतः प्रतिक्षणमावरणविलयः, विशिष्टविशिष्टतरतत्कार्यबोधाद्यनुभवात्, तदतिशये पुनः सामस्त्योच्छेदः स्यादित्यभिदध्महे। एतेन यत्परे प्रोचुः यथा– प्रत्यक्षादिप्रमाणपञ्चकगोचरातिक्रान्तत्वात् सर्वार्थसंवेदनमभावाख्यं षष्ठप्रमाणगोचरतां प्रतिपद्यते तदयुक्तम्, तत्संभवस्यानुमानेन प्रतिपादनात्, प्रमाणपञ्चकप्रवर्तनाभावासिद्धेः किं च। प्रमाणपञ्चकं तद्गोचरं न प्रवर्तते इति कथं भवतो निर्णयः किं नियतदेशकालव्याप्त्या, यद्वा समस्तदेशकालास्कन्दनेनेति? यद्याद्यः पक्षः, ततो यथा

मिथ्यावलेपाध्मातान्तःकरणा इति। अलीकाभिमानापूरितमनसः। चित्रभानोरिति। वह्नेः। स्थेमेति। स्थिरस्य भावः, पृथ्व्यादित्वादिमनि स्थादेशे ध्रौव्यमित्यर्थः। ज्ञानाद्यभ्यासत इति। ज्ञानाभ्यासात् ज्ञानावरणविलये ज्ञानावरणविलयकार्यो ज्ञानविशेषो दृश्यते। आदिशब्दात् दर्शनाभ्यासात् दर्शनावरणविलये दर्शनावरणविलयकार्यो दर्शनविशेषानुभवो गृह्यते। एवं चारित्राभ्यासेऽपि। तदतिशये ज्ञानाद्यभ्यासातिशये ॥ २७॥

घटादेः क्वचित् प्रमाणपञ्चकं तद्गोचरं निवर्तमानमभावं साधयति, एवं समस्तवस्तु-संवेदनगोचरमपि तन्निवर्तमानं नियतदेशदशावच्छिन्नमभावं साधयेत्, न सर्वत्र, ततश्च घटादिवत् तदुर्निवारं स्यात्। अथ द्वितीयः पक्षः, असौ असंभव्येव, समस्त-देशकालवर्तिपुरुषपरिषत्संवेदनसाक्षात्कारिणो ह्येवं वक्तुं युक्तम्- यदुत न क्वचित् समस्तार्थसंवेदनमस्ति इति, न भवतः, तथाविधपुरुषसंभवानभ्युपगमात्, इतरथा य एव कश्चिन्निश्चित्यैवमभिदध्यात्, स एव समस्तवस्तुविस्तारव्यापिज्ञानालोकः इति समस्तार्थगोचरसंवेदनसिद्धिरित्यास्तां तावत् ॥ २७ ॥

तदेवं प्रमाणविषये लक्षणसंख्याविप्रतिपत्ती निराकृत्याधुना क्रमप्राप्तां गोचर-विप्रतिपत्तिं बहुवक्तव्यत्वादनिराकृत्य तावत् फलविप्रतिपत्तिं निराचिकीर्षुराह—

प्रमाणस्य फलं साक्षादज्ञानविनिवर्तनम् ।
केवलस्य सुखोपेक्षे शेषस्यादानहानधीः ॥ २८ ॥

द्विविधं हि प्रमाणस्य फलम्—साक्षादसाक्षाच्च, अनन्तरं व्यवहितं चेत्यर्थः। तत्र साक्षादज्ञानमनध्यवसायः प्रमेयापरिच्छित्तिस्तस्य विनिवर्तनं विशेषेण प्रलया-पादनं प्रमाणस्य फलम्, अज्ञानोद्दलनद्वारेण तस्य प्रवृत्तेः, तस्य च सर्वानर्थ-मूलतया प्रमात्रपकारित्वात् तन्निवर्तनस्य प्रयोजनता युक्तैव, एतच्चानन्तरप्रयोजनं सर्वज्ञानानामेकरूपत्वात् सामान्येनोक्तम्। व्यवहितप्रयोजनं पुनर्विभागेनाह— केवलस्य सर्वज्ञज्ञानस्य सुखं वैषयिकसुखातीतपरमाह्लादानुभवः, उपेक्षा साक्षात् समस्तार्थानुभवेऽपि हानोपादानेच्छाभावान्मध्यस्थवृत्तिता, ते सुखोपेक्षे फल-मित्यर्थः। शेषस्य तद्व्यतिरिक्तप्राकृतलोकप्रमाणस्यादानं ग्रहणं हानं परित्याग-स्तयोरादानहानयोर्धीर्बुद्धिरादानहानधीः सा फलं इति यावत्। ततश्चादेयानां सम्य-ग्दर्शनादि स्रक्चन्दनादीनां यादित्सा, तथा हेयानां मिथ्यादर्शनादिविषकण्टका-दीनां या जिहासा प्रमाणसाध्या, अप्रमाणात तदसिद्धेः, प्रेक्षापूर्वकारिणां ततः प्रवृत्त्ययोगादित्युक्तं भवति ॥ २८ ॥

अधुना गोचरविप्रतिपत्तिं निराचष्टे—

---

अज्ञानोद्दलनद्वारेणेति। अज्ञानमुद्दलयदेव प्रमाणं प्रवर्तते इति। किमुक्तं भवति? न प्रमाणात् फलमेकान्तेन भिन्नमभिन्नं वा, भेदाभेदरूपतयैवानन्तरपरंपरभेदस्य प्रतिभासनात्। तथा हि- यस्यैवात्मनः प्रमाणकारितया परिणामः फलरूपतयापि तस्यैव सः, य एव प्रमि-मीते स एव निवृत्ताज्ञानो जहात्याददाति उपेक्षते चेति प्रतीतः। एष चैकप्रमात्रपेक्षया प्रमाणफलयोरभेदः, करणक्रियापरिणामभेदाच्च भेदः। उक्तं च—

पारंपर्येण साक्षाच्च फलं द्वेधाभ्यधायि यत् ।
जिनैर्भिन्नमभिन्नं च प्रमाणात्तदिहोदितम् ॥ २८ ॥

अनेकान्तात्मकं वस्तु गोचरः सर्वसंविदाम्।
एकदेशविशिष्टोऽर्थो नयस्य विषयो मतः ॥ २९ ॥

अनेके बहवोऽन्ता अंशा धर्मा वा आत्मानः स्वरूपाणि यस्य तदनेकान्तात्मकम्। किं तत्? वस्तु बहिरन्तश्च, गोचरो विषयः सर्वसंविदां समस्तसंवित्तीनाम्। अनेनानेकान्तमन्तरेण संवेदनप्रसरव्यवच्छेदं दर्शयति, भ्रान्तसंवेदनानामप्यनेकान्तोद्योतनपटिष्ठतया प्रवृत्तेः, केवलं केषुचिदंशेषु विसंवादकत्वादप्रमाणानि तानि संगीर्यन्ते। तदयमभिप्रायः—यदा संवेदनसामान्यमप्यनेकान्तविरहेण न प्रवर्तितुमुत्सहते, तदा तद्विशेषणभूतं प्रमाणं एकान्ते प्रवर्तिष्यते इति दूरापास्तावकाशा एवैषा वार्ता, तथाप्यनादिमिथ्याभिनिवेशवासितान्तःकरणाः कुदर्शनविप्रलब्धबुद्धयो बहवोऽत्र विप्रतिपद्यन्ते इति सर्वप्रमाणानामनेकान्तगोचरत्वसाधकं प्रमाणमभिधीयते। इह यत्प्रमाणं तत्परस्पराविनिर्लुठितानेकधर्मपरिकरितवस्तुनो ग्राहकम्, तस्यैव तत्र प्रतिभासमानत्वात्, इह यद्यत्र प्रतिभाति, तदेव तद्गोचरतयाभ्युपगन्तव्यम्। तद्यथा- निरादीनवनयनप्रभवदर्शने प्रतिभासमानं पाटलतया जपाकुसुमं तथैव तद्गोचरतयाभ्युपगम्यते, परस्पराविभक्तानेकस्वभावाक्रान्तमूर्तिकं च बहिरन्तश्च वस्तु सर्वप्रमाणेषु प्रथते इति, अतस्तदेव तेषां गोचरः। न चेतरेतरविशकलितधर्मिधर्मभाववादिभिः कणभक्षाक्षपादशिष्यकैस्तावदस्य हेतोरसिद्धतादिदोषः प्रतिपादयितुं शक्यः, तदभ्युपगममन्तरेण स्वाभिप्रेतवस्तुनोऽवस्थानाभावात्। तथा हि- एकस्मिन् धर्मिणि बहवो धर्मास्ततो भिन्नतनवः कथं वर्तेरन्? भेदाविशेषेण सर्वत्र तद्वृत्तिप्रसङ्गात्। तत्रैव तेषां समवायान्नान्यत्र वर्तन्ते इति चेत्, ननु सोऽपि समवायो यद्युपकार्योपकारकभावव्यतिरेकेणापि भवति, ततः सर्वत्राविशेषेण प्रसज्येत, तदभावाविशेषात्। अस्त्येवोपकार्योपकारकभाव इति चेत्, हन्त हतोऽसि अनेकोपकारकस्यानेकस्वभावताप्राप्तेः, तद्विरहेऽनेकोपकारकत्वाभावात्। न हि येन स्वभावेनैकस्योपकरोति तेनैव द्वितीयस्य, तस्य तत्रैवोपयुक्तत्वात्, द्वितीयोपकारकस्वभावस्य तदुपमर्दनद्वारेणोत्पत्तेः, इतरथैकमेवोपकुर्वंस्तिष्ठेत्, तदेकस्वभावत्वात्। भिन्नाभिः शक्तिभिरुपकरोति न भिन्नैः स्वभावैः, तेन नानेकान्त इति चेत्, तास्तर्हि कथं वर्तन्ते इति वाच्यम्। समवायाद् इत्युत्तरेऽसावप्युपकार्योपकारकभावमन्तरेण कथं न सर्वत्र इति प्राचीनं चोद्यं पश्चाल्लग्नमनुधावति। उपकार्योपकारकभावाभ्युपगमे पुनरप्यनेकस्वभावताप्रदर्शितयुक्तेः पुनः शक्त्युपकारकभिन्नशक्ति-

---

**निरादीनवेति**। आदीनवो दोषः। **इतरेतरेत्यादि**। विविधानि शकलानि येषां तानि विशकलानि, तानि करोतीति इनि विशकलयन्ते पृथक्क्रियन्ते स्मेति कर्मणि क्तः, विविधानि शकलानि संजातानि येषामिति तारकादेराकृतिगणत्वात् इतच्प्रत्ययो वा, तत इतरेतरं विशकलिताविति विशेषणसमासे तेषां धर्मधर्मिभावं वदन्तीत्येवंशीलास्तैः।

परिकल्पनेऽप्यनेकान्तान्मोक्षः इति वरमादावेव मत्सरितां विहायानेकधर्माध्यासितं वस्त्वभ्युपगतं किं भेदकल्पनयास्थान एवात्मना परिक्लेशितेन इति। किं चानेकान्ताभ्युपगमे सत्येष गुणः– परस्परविभक्तेषु संयोगिसंयोगसमवायिसमवायगुणिगुणावयवावयविव्यक्तिसामान्यादिषु संयोगसमवायगुण्यवयविसामान्यादीनां संयोगिसमवायिगुणावयविशेषादिषु वर्तनचिन्तायां यद्दूषणजालमुपनिपतति, तदपि परिहृतं भवति, एकान्तभेद एव तदुपपत्तेः, अनेकान्ते तदुत्थानाभावात्। तथा हि– भिन्नाः खलु संयोगादयः संयोग्यादिभ्यो विकल्पयितुं पार्यन्ते– यदुत कथमेत एतेषु वर्तन्ते इति। किमेकदेशेन यद्वा सामस्त्येन। यद्येकदेशेन, तदयुक्तम्, तेषां निरवयवत्वाभ्युपगमात्, सावयवत्वेऽपि तेभ्योऽवयवेभ्यो यद्यभिन्नाः, ततोऽनेकान्तापत्तिः, एकस्यानेकावयवत्वप्राप्तेः। अथ भिन्नास्तेष्वपि ते कथं वर्तन्ते इति वाच्यम्, एकदेशेन सामस्त्येन वा। एकदेशपक्षे तदेवावर्तते इत्यनवस्था। अथ सामस्त्येन तदप्यसाधीयः, प्रत्येकं परिसमाप्ततया संयोगादिबहुत्वप्रसङ्गात्तदभिन्नाः पुनः संयोगादयो न विकल्पभाजो भवन्ति। अभेदपक्षेऽपि संयोगादिमात्रं संयोग्यादिमात्रं वा स्यादिति चेन्न, तस्याप्येकान्तेनानभ्युपगमात्, किं तर्हि अन्यान्या विश्लिष्टस्वरूपा विवक्षया संदर्शनीयभेदाः सर्वे एवैतेऽभ्युपगम्यन्ते, तथाविधानां कुयुक्तिविकल्पोत्थापितदूषणसमूहनिराकरणक्षमत्वात्, अबाधितप्रतिभासेषु सर्वत्र तेषां तथैव प्रतिभासनात्, अन्यथा प्रतिभासमानानामन्यथा परिकल्पने दृष्टहान्यदृष्टपरिकल्पनाद्वारेणासमञ्जसप्राप्तेः, तथा च ब्रह्माद्वैतशून्यवादादयः सिद्धिमश्नुवीरन्, विशेषाभावादिति ॥

एतेनास्य हेतोः कापिला अप्यसिद्धतादिदोषमभिधित्सवो मौक्यमानीताः। तथा हि– अन्तरेकं संवेदनमपरापरहर्षविषादाद्यनन्तधर्मविवर्ताक्रान्तरूपं बहिश्च घटादिकमर्थं नवपुराणादिवर्तुलपार्थिवत्वाद्यनेकस्वभावावष्टब्धशरीरं साक्षाल्लक्षयन्तः कथं तद्विपरीतकथने प्रवर्तेरन्? प्रकृतिपुरुषात्मकं द्रव्यमेवैकं तात्त्विकम्, पर्यायभ्रान्ति, जनकः पुनर्विवर्तोऽपारमार्थिक इति चेन्न, द्वयोरपि सर्वप्रमाणेषु प्रकाशमानयोरबाधितयोः सर्वव्यवहारनिबन्धनयोः पक्षपातमन्तरेणैकस्य निह्नोतुमशक्यत्वात्। तथा सति विवर्त एव तात्त्विकः, द्रव्य पुनरलीकमिति पर्यायपक्षपाती प्रसञ्जयन् दुर्निषेधः स्यादिति। अथेत्थमभिदधीथाः– द्रव्यं सर्वत्राव्यभिचरितरूपत्वात् सत्यम्, पर्यायाः पुनर्व्यभिचारिण इत्यसत्याः। तदयुक्तम्, यदि नाम द्रव्यमभेदरूपत्वात्

परस्परविभक्तेषु संयोगिसंयोगसमवायिसमवायगुणिगुणावयवावयविव्यक्तिसामान्यादिष्विति। अत्र गुणग्रहणेनैव संयोगे लब्धे गोबलीवर्दन्यायेनात्यन्तप्रसिद्धत्वात् गुणेभ्यो निष्कृष्य पृथक् संयोगस्योपादानम्, गुणास्तु रूपादयो द्रष्टव्याः, आदिशब्दाद् द्रव्ये कम्पादिकर्मणो वृत्तौ दूषणपरिग्रहः। तेषां संयोगादीनाम्। दृष्टेत्यादि। संयोग्यादिभ्यः कथंचिद्भिन्नाः

सर्वत्रानुवर्तते, पर्यायास्तु भेदरूपत्वात् व्यवच्छिद्यन्ते, तथापि तत्सत्यम् इतरेऽलीका इति वक्तुं न पार्यते, न हि नीलं पीतरूपतां न बिभर्ति इत्येतावता तदसत्यम्, अतिप्रसङ्गात्, सर्वस्य पररूपपरिहारावस्थायितयालीकत्वप्राप्तेः। अथ द्रव्यमेव पर्यायास्तदव्यतिरिक्तत्वात् तत्स्वरूपवत्, न सन्ति वा द्रव्यव्यतिरेकिणः पर्यायाः निःस्वभावत्वात् खपुष्पवत् इति प्रमाणयसि, तथा सति पर्याया एव द्रव्यं, तदव्यतिरिक्तत्वात् तत्स्वरूपवत्, नास्ति वा पर्यायव्यतिरिक्तं द्रव्यम् निष्पर्यायत्वात् आकाशकुसुमवदिति इतरोऽपि प्रमाणयन् केन वार्यते। तन्न पक्षद्वयेऽपि काचिद्विशेषोपलब्धिरिति। यथैवानन्तसहक्रमवर्तिपर्यायाध्यासितं वस्तु सर्वप्रमाणेषु प्रकाशते तथैवाभ्युपगन्तव्यम्, तथा चान्यस्याभावात् तदेव तद्गोचर इति स्थितम्॥

तथा सुगतमतानुसारिणामपि मध्ये सौत्रान्तिकस्तावदस्य हेतोरसिद्धतामाविर्भावयितुं नोत्सहते, तदभ्युपगतिव्यतिरेकेण निजदर्शनव्यवस्थानुपपत्तेः। तथा हि– बहिस्तावदेकं कारणमपरापरसामग्र्यन्तःपातितयानेककार्यकार्यावेद्यते, यथा रूपं स्वोत्तरक्षणं स्वावगाहिज्ञानादिकं च युगपज्जनयति। यदि चैकक्षणवर्तिनः सामग्रीभेदेन भेदमनुभवत एव भिन्नदेशनानाकार्यकारिता, तथा सति नित्यपक्षोदितं दूषणं स्वमस्तकोपनिपाति स्यात्, तस्यापि तथैव भिन्नकालकार्यनिवर्तनेऽपि भेदाभावप्रसङ्गात्। तथा प्रतिभासभेदेन क्षणक्षयिरूपादिस्वलक्षणत्वाभ्युपगमश्चैवं निर्निबन्धनः स्यात्, कौटस्थ्यमाबिभ्रतोऽपि द्रव्यस्यापरापरकारणकलापान्तर्गततया नवपुराणादिपर्यायरूपरसगन्धस्पर्शावभासलक्षणकार्यसंपादनाविरोधप्रसक्तेः। किं चायमेकं स्वावयवव्यापिनं कालान्तरसंचरिष्णुमाकारं साक्षाल्लक्षयन् क्षणक्षयिपरमाणुलक्षणानि स्वलक्षणानि व्याचक्षीत नान्यथा, यथाकृतं तदवभासस्य स्वप्नान्त-

संयोगादय इति दृष्टम्, घटपटादिवदेकान्तभेदिनः संयोगादय इति स्वप्नेऽप्यदृष्टम्, तयोर्हानिपरिकल्पने त एव द्वारं तेन॥ सौत्रान्तिक इति। 'सूत्र अवमोचने' चुरादावदन्तः, ततः सूत्र्यते निर्णीयते तत्त्वमनेनेति स्वरान्तत्वादलि सूत्रमागमः तस्यायं सौत्रः, अन्तः परिनिष्ठा; यदाहुस्तद्वादिनः – प्रतिक्षणं विशरारवो रुपरसगन्धस्पर्शपरमाणवो ज्ञानं चेत्येव तत्त्वम् इति, ततः सौत्रश्चासौ अन्तश्च सौत्रान्तः, स विद्यते यस्य, अतोऽनेकस्वरात् (सि० हे० ७–२–६) इति इकः। यद्वा सूत्रान्तः प्रयोजनं प्रवर्तकं यस्य इति प्रयोजनम् (सि० हे० ५–४–११७) इतीकण्। स्वोत्तरेत्यादि। स्व आत्मीयः स चासौ उत्तरक्षणश्च, यद्वा स्वस्मादुत्तरः स्वोत्तरः स चासौ क्षणश्चेति, स्वस्योत्तरक्षणः स्वोत्तरक्षण इति वा। स्वमात्मानमवगाहते विषयीकरोतीत्येवंशीलं स्वावगाहि, तच्च तत् ज्ञानं चेति। आदिशब्दात् सहकारिकारणभावेन रसालोकादिकार्यजननग्रहः। नित्यपक्षोदितमिति। एकस्य भिन्नकालानेककार्यजनकस्वभावत्वे विरुद्धधर्माध्यासादनेकत्वमिति। तथैवेति। यथैककालमेकमनेकदेशं नानाकार्यं कुर्वदप्येकमेव, तथा अभिन्नकालानेककार्यवर्तनेऽप्येकमेवेति स्थायि-

रेऽप्यनुपलक्षणात्, लक्षितस्य चालक्षितव्यतिरेकनिराकरणतस्तादात्म्यं कथयन् स्वगिरानेकान्तावभासं समर्थयते। तथा हि– अलक्षितपरमाणुपारिमाण्डल्यप्रतिक्षणविवर्तमपि स्वलक्षणं स्थिरस्थूराद्यात्मना दर्शयति स्वरूपम्, अन्यथा सुषुप्तं जगदासज्येत, तदप्रकाशने प्रमाणान्तरस्याप्यत्यन्तविलक्षणस्वलक्षणावेदकस्याप्रवृत्तिप्रसङ्गात्। तथान्तःसंवेदनमर्थस्वरूपापेक्षया बहिर्मुखान्तर्मुखसविकल्पाविकल्पभ्रान्ताभ्रान्तादिप्रतिभासमेकमभ्युपयतः कथमनेकान्तावभासोऽसिद्धः स्यात्? तथा नानादेशस्थितार्थसार्थसमर्पिताकारोपरक्तमेकमाकारभेदेऽप्यन्यथा युगपत्प्रकाशमानसितासिताद्यर्थव्यवस्थित्यनुपपत्तेः संवेदनमनुमन्यमानः कथं भिन्नसमयभावि हर्षविषादाद्यनेकविवर्तवशात् तदभेदमात्यन्तिकमभिदधीत, अभिन्नयोगक्षेमत्वात्। युगपद्भाविनां संविदन्तर्निविष्टाकाराणामेकत्वं न हर्षादीनाम्, तद्विपर्ययादिति चेन्न, तत्सामर्थ्यव्यवस्थाप्यार्थाभेदप्रसङ्गात्, तदेकतया सितपीतादिषु ज्ञानस्य बोधरूपेणवाविशिष्टत्वात्। तदेवं बहिरन्तश्चैकानेकरूपत्वे प्रमाणतः स्थिते स्वलक्षणस्यान्यथा स्वाभ्युपेतदर्शनव्यवस्थायोगाद् नार्थवाद्यनेकान्तप्रकाशं प्रतिक्षेप्तुमर्हति ॥

त्वासिद्धिः। **अलक्षितेत्यादि**। परिमण्डलाः परमाणवः तेषां भावः पारिमाण्डल्यं वर्तुलत्वं परमाणुपरिमाणमेव वा, अनुशतिकादित्वाद् उभयपदवृद्धिः। प्रतिक्षण प्रतिसमयं विवर्तः परिणमनं स तथा, परमाणूनां पारिमाण्डल्यप्रतिक्षणविवर्तौ, तथा न लक्षितौ परमाणुपारिमाण्डल्यप्रतिक्षणविवर्तौ यस्य स्वलक्षणस्य तत्। **स्थिरस्थूरादीति**। आदिशब्दात् पृथुबुध्नोदराद्याकारो गृह्यते। **तदप्रकाशने** स्थिरस्थूराद्यात्मकवस्त्वप्रकाशने। **बहिर्मुखेति**। बहिर्बाह्यवस्तुविषये मुखमारम्भः प्रकाशनप्रवृत्तिर्यस्य तत्तथा बाह्यवस्त्वभिमुखमित्यर्थः। एवमन्तर्मुखेत्यप्युक्तानुसारतो व्याख्येयम्, आदिशब्दात् प्रमाणाप्रमाणादिपरिग्रहः। **नानादेशेत्यादि**। उपरक्तं विशेषितं एक संवेदनमिति संबन्धः। **अन्यथेति**। नानाकारोपरक्ताभावे। **अभिन्नयोगक्षेमत्वादिति**। प्रागवद्भावनीयम्। **तद्विपर्ययादिति**। भिन्नकालभावित्वात्। **तत्सामर्थ्यादित्यादि**। तेषां संविदन्तर्निविष्टाकाराणां सितपीतादीनां सामर्थ्यम्, तेन व्यवस्थाप्यो योऽर्थस्तस्यैक्यप्रसङ्गात्। **तदेकतया** आकाराणामेकतया, सितपीतादिवस्तुविषयिणो ज्ञानस्य बोधरूपेणैव वा विशिष्टत्वात्, बोधस्वरूपतैव ज्ञानस्योद्वरिता, न पुनः सितपीतादयो बहिरर्थव्यवस्थापकाः केचिदाकाराः। क्वापि बोधरूपेणवाविशिष्टत्वात् इति पाठः, तदैवं व्याख्या– यथा बहुष्वपि सितपीतादिषु वस्तुषु ज्ञानस्य बोधरूपेणाविशिष्टत्वं समानत्वम्, तथा सितपीताद्याकाराणामेकतयापीत्यर्थः। अयमभिप्रायः– यदेकज्ञानान्तर्वर्तिनां नानादेशव्यवस्थितार्थप्रभवानां बहूनामप्याकाराणामेकत्वम्, तदा तदेकाकारज्ञानव्यवस्थाप्यस्य बहिर्वस्तुस्तोमस्याप्येकत्वं स्यात्; एकनीलाकारज्ञानव्यवस्थाप्यबहिर्नीलस्वलक्षण एकत्ववत्। **बहिरन्तश्चेत्यादि**। प्रमाणत एकानेकरूपत्वे स्वलक्षणस्य व्यवस्थिते इति संबन्धः। यथा च वृक्षादिवस्तूनां संनिहितासंनिहिताभ्यां स्पष्टास्पष्टप्रतिभासजनकत्वेन स्वलक्षणत्वम्, यस्या-

तथोररीकृतयोगाचारमतमपि बलादनेकान्तप्रकाशरज्जुरावेष्टयति, एकस्यापि ज्ञानस्यानेकवेद्यवेदकाकारतया प्रथनोपगतेः। एकयोगक्षेमत्वात् तदैक्यमिति चेन्न, युगपदुदयप्रलयवतां सहवेदिनां सकलसंतानानामेकत्वप्रसङ्गात्। संवृतिदर्शितत्वादनेकत्वस्य न तेन स्वसंवेदनसाक्षात्कृतपारमार्थिकैकत्वक्षतिरिति चेन्न, ब्रह्मवादिमताप्रतिषेधप्रसक्तेः। यतोऽनाद्यविद्याबलादेकमक्रमं सचेतनं स्वसंवेदनसाक्षात्कृतमपि ब्रह्मानेकं क्रमवत् चेतनाचेतनं परोक्षापरोक्षं लक्ष्यते, भवत्परिकल्पितग्राह्यग्राहकाकारविविक्तसंवेदनवदिति तेनापि न दुरुपपादम्। अस्तु चायमनेकान्तावभासो भ्रान्तस्तथापि संवेदनस्याद्वयता न लक्ष्यते, तल्लक्षणे सकलामुमतामधुनैव मुक्ततावाप्तेः, लक्ष्यते च तत्कथंचित्, इतरथा सुषुप्तदशावत् सर्वव्यवहारोच्छेदप्रसङ्गात्, इत्येकस्यापि संवेदनस्य लक्षितालक्षितत्वेनानेकान्तप्रतिभासो दुःशकोऽपह्नोतुमिति ज्ञानवाद्यप्यस्य हेतोरसिद्धताविर्भावनं प्रति तूष्णीमासीत्॥

शून्यवादिनः समस्ताभावादसिद्धोऽनेकान्तप्रकाश इति चेन्न, तस्यापि प्रमाणप्रमेयाभावेन सर्वाभावावेदनं समस्ति, अन्यथाप्रमाणकं सर्वं सर्वत्र विद्यते इति परस्यापि वदतो न वदनभङ्गः स्यात्, तदभ्युपगमेऽभ्युपगमक्षतिः। तयोश्च दर्शितवदनेकान्तप्रकाश इति नासिद्धो हेतुः। मरुमरीचिकानिचयचुम्बिनि संवेदने जलोल्लेखेऽपि तद्गोचरत्वाभ्युपगमाभावादनैकान्तिकोऽयमिति मा शङ्किष्ठाः, तस्य भ्रान्तत्वात्, अभ्रान्तः प्रकाशो हि तदभ्युपगतिहेतुः। अथायमपि इतरेतरविनिर्लुठितपरमाणुक्षणक्षयिबोधेन बाध्यमानत्वात् भ्रान्त इत्याचक्षीथाः, तदयुक्तम्, यतस्तद्बोधः किमुपलब्धिमात्रम् यद्वा निर्णयो वा। यद्याद्यः कल्पः, तदानुमानं विशीर्यत, निर्गोचरत्वात्, प्राथमकल्पिकेनैव निर्विकल्पकविविक्तदर्शनेन विरोधभीरुतया सर्वथा

---

र्थस्य संनिधानासंनिधानाभ्यां ज्ञानप्रतिभासभेदः तत स्वलक्षणमिति तल्लक्षणात्, तथान्तःसंवेदनस्यापि। तथा हि– स्मर्यमाणसंवेदनमसंनिहितत्वादस्फुटं प्रतिभाति, अनुभूयमान तु संनिहितत्वात् स्फुटम्। यद्वा परसंतानवर्ति संवेदनं संनिहितत्वादस्फुटम्, स्वसंतानवर्ति तु संनिहितत्वात् स्फुटम्, तस्मादन्तःसंवेदनस्यापि तल्लक्षणलक्षितत्वात् स्वलक्षणमिति। **योगाचारेति** योजनं योगः, ज्ञानाकारयोः संबन्धः, तमाचरन्ति व्यवहरन्ति इति कर्मण्यण् इति अण्, साकारज्ञानमात्रवादिन इत्यर्थः, योगः समाधिः साकारज्ञानमात्रैकाग्रता, तमाचरन्ति इति वा, पूर्ववत् अण्। **ब्रह्मेति** ज्ञानाद्वैतमिति। **न तेनापि दुरुपपादमिति**। एतत् कर्मतापन्नं तेनापि ब्रह्मवादिना न दुःखेनोपपाद्यते, किंतु सूपपादं–सुखेनैव घटयितुं शक्यमित्यर्थः। **मुक्ततावाप्तेरिति** तत्त्वज्ञानोत्पत्तिर्मुक्ति इति मुक्तिलक्षणाभिधानात्, तत्त्वं च ज्ञानाद्वैतमेवेति तेषामभिप्रायः॥ **तस्यापीति**। शून्यवादिनः परस्यापि सांख्यस्य। **तदभ्युपगमे** प्रमाणप्रमेययोरङ्गीकारे। **तदभ्युपगतिहेतुरिति**। प्रतिभासमानार्थगोचरत्वाङ्गीकारकारणमनुमानमिति क्षणिकत्वसाधकम्। **प्राथमकल्पिकेनैवेति**। कल्पः पक्षः, प्रथमश्चासौ

वस्तुग्रहणाभ्युपगमात्, प्रमाणकलिते च मानान्तरवैयर्थ्यादनवस्थाप्राप्तेः। अथ द्वितीयः, तथा सति सर्वं निर्विकल्पकमप्रमाणतामश्नुवीत। न च निर्णयोऽनेकान्तप्रकाशं बाधते, अपि तु समर्थयते, बहिरन्तश्च तथैव तद्विजृम्भणात्। अथ सर्वथा वस्तुग्रहणेऽपि निर्विकल्पकं यत्रांशे पाश्चात्यं व्यवहारकारिव्यवसायमुपजनयति, तत्रैव प्रमाणतामास्कन्दति नान्यत्रेति मन्येथाः, तथा सति यदनन्तरमर्थक्रियासमर्थार्थप्रार्थनया पुरुषः प्रवर्तते स एव निर्णयः प्रामाण्यं स्वीकुर्यान्न निर्विकल्पकम्, तज्जनकत्वेऽपि संनिकर्षादिवदित्यासज्येत। निर्विकल्पकमनधिगतार्थाधिगन्तृत्वात् प्रमाणं न व्यवसितिः तद्विकल्पत्वादिति चेन्न, अनुमितेरपि तद्वदप्रामाण्यप्रसङ्गात्। न च विपरीताकारनिराकरणचतुरतयानुमितिर्विशेषवती, निर्णीतेरपि तदपनोददक्षत्वादसमारोपविषयेऽप्रवृत्तेः। त्रिरूपलिङ्गजतया विशेषोऽनुमितेर्मानतासाधक इति चेत्, साक्षादनुभवादुत्पादस्तर्हि निर्णीतेर्महापराध इति भवतो बालतामीक्षामहे। किं च, यथा निर्विकल्पकम-

कल्पश्च, तत्र भव. प्राथमकल्पिकः तेन, प्रथमप्रक्षाभिहितेनेत्यर्थः, अध्यात्मादेः इति ठञ्।
**विरोधभीरुतयेति**। न ह्येकस्य वस्तुनो नीलत्वादि गृह्यते। न पुनः क्षणिकत्वादीति भावः।
**अप्रमाणतामिति**। सदृशापरापरविप्रलम्भेन दृश्यविकल्प्ययोरेक्याध्यवसायाद्विकल्पाः क्षणिकतां न गृह्णन्तीति तद्विषयं वस्तुबलप्रसूतं निर्विकल्पमिति भवता पर्यकल्पि। यदि चाधुना निर्णयेन क्षणक्षयिणः परमाणवो गृह्यन्ते इत्यभ्युपगमः, ततो न किंचिन्निर्विकल्पकेनेति भावः। **समर्थयते इति**। "अर्थ उपयाच्ञायाम्" चुरादावात्मनेपदी, यदि तु बहुपु पुस्तकेषु समर्थयतीति पाठः, तदैव गमनिका— समर्थनं समर्थः तं करोति इन्, अनेकान्तप्रकाशस्य समर्थनां करोतीत्यर्थः। अथवा चर्च कान्ति एजृ भ्राजृ दीप्तौ इत्यात्मनेपदिषु पठित्वा पुनः भ्राजट् भासट् भ्लासृ दीप्तौ इति आत्मनेपदिषु भ्राज पठन् अन्येषामात्मनेपदिनां धातूनामात्मनेपदं शिष्टप्रयोगानुसारेण व्यभिचरतीति दर्शयति, तेन लभति लभते, सेवति सेवते, समर्थयति समर्थयते। श्रोतारमुपलभति न प्रशंसितारम्। स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः। इत्यादयः साधव इति स्थितम्। **अथेत्यादिना** प्राच्यविकल्पमेवाङ्गीकुर्वन्नाह— **तज्जनकत्वे इति**। निर्णयजनकत्वे संनिकर्षादिवद् इति। यथा प्रमाणभूतज्ञानजनकोऽपि संनिकर्षो न प्रमाणम्, देहादिभिरतिप्रसङ्गात्, तथा निर्विकल्पकमपीत्यर्थः। **असमारोपविषयेऽप्रवृत्तेरिति**। यत्रैव किंचिद्विपरीतमारोपितं भवति, तत्रैव तदपनोदद्वारेण निर्णयस्यापि प्रवृत्तिरित्यर्थः। तथा चागमे— किमयं स्थाणुः पुरुषो वेति ईहानन्तरमेव पुरुष एवायमित्यपायाभिधानात्। अत एव क्षमाश्रमणोऽपि— अब्भत्थेऽवाओ च्चिय कत्थइ लक्खिज्जइ इमो पुरिसो इति पूर्वपक्षयित्वा—

उप्पलदलसयवेहो व्व दुव्विभावत्तणेण पडिहाइ।
समय व सुक्कसक्कुलिडसणे विसयामुवलद्धी॥

( विशे० भा० २९८–२९९ )

लक्षितं सकलव्यावृत्तस्वलक्षणग्रहणप्रवणमपि कतिचिदंशविषयं विकल्पमुत्थापयति, तथार्थ एवेन्द्रियालोकादिसंनिकृष्टतया कतिचिन्निजांशविषयं साक्षाद् विशदविकल्पं जनयेदिति किमजागलस्तनकल्पनिर्विकल्पकल्पनया ? तावन्तोऽशा बहिरर्थे विरुध्यन्ते इति चेत्, पाटवापाटवादयो दर्शनेऽप्येकस्मिन् न विरुध्यन्ते इति किं राज्ञामाज्ञा ? तस्मान्न क्षणक्षयिपरमाणुलक्षणस्वलक्षणलक्षकं क्वचित् कदाचिद्दर्शनं लक्षयन्ति, भवन्तोऽपि केवलं स्वदर्शनानुरक्तान्तःकरणतया न तदसत्तां प्रतिपद्यन्ते । स्वांशव्यापिनं कालान्तरानुयायिनमेकं बहिरन्तश्चार्थं बोधं च प्रकाशयन् प्रथमानो निर्णयः न पुनर्निर्मूलकैः कुयुक्तिविकल्पैर्बाध्यते इति न भ्रान्तः । किं चास्य भ्रान्ततां कथयन् सर्वप्रमाणप्रमेयव्यवस्थामुन्मूलयति । तथा हि–यत्सत्त्वबोधरूपत्वसुखत्वादिषु प्रमाणं तदेव क्षणक्षयित्वस्वर्गप्रापणशक्तियुक्तत्वादिषु अप्रमाणम्, तथा यद्वस्तु नीलचतुरस्रोर्ध्वतादिरूपतया प्रमेयं तदेव मध्यभागक्षणविवर्तादिनाप्रमेयम्, तथा यद् बहिरर्थापेक्षया सविकल्पकं स्वप्नादिदर्शनं वा भ्रान्तं तदेव स्वरूपापेक्षयाभ्रान्तम्, तथा यन्निशीथिनीनाथद्वयादिकं द्वित्वेऽलीकं तदपि धवलतानियतदेशचारितादावनलीकमिति निर्णयः । यदि तु विरोधाद् बिभ्यद्भिर्भवद्भिरयमपह्नूयते, किमपरमैकान्तिकं प्रमाणं प्रमेयं चोररीकृत्य स्वाकूतं प्रतिष्ठापयेयुरिति सकौतुकं नश्चेतः । अथ ज्ञानवादी अद्वैतप्रकाशमलक्षितमभ्युपेत्य तेन बाहुविध्यं दधानो बोधो बाध्यमानत्वात् भ्रान्त इत्यभिदध्यात्, तदयुक्तम्, दृष्टहान्यदृष्टपरिकल्पनाप्रसङ्गात्, अलक्षितनिर्विकल्पदर्शनस्य च प्रागेव प्रतिक्षिप्तत्वात् । अथ युक्तिर्बोधस्य वैविध्यं बाधेत, तथा हि–

---

इति परिहृतवान् । **कतिचिदंशविषयमिति** । नीलादिविषयम्, न क्षणिकादिविषयम् । **तावन्तोऽशा इति** । नीलत्वाक्षणिकत्वचतुरस्रत्वोर्ध्वत्वादयो विरुध्यन्ते इति निरंशैकस्वभावत्वाद् वस्तुनः । **पाटवापाटवादय इत्यादि** । समाधानार्थस्तु तर्हि निर्विकल्पदर्शनस्यापि नीलादिविकल्पं जनयतो नीलादिविकल्पजनने पाटवम्, क्षणिकत्वादिविकल्पं चाजनयतस्तत्रापाटवम् । आदिशब्दात्तु बोधरूपत्वनिर्विकल्पत्वाभ्रान्तत्वादयो धर्मा गृह्यन्ते । ते च पाटवादयः परस्परविरुद्धाः, नैकत्रदर्शने संभवन्ति इति दर्शनस्यापि न विकल्पजनकत्वमित्यभिप्रायः । **यदिति** संवेदनम् । **सत्त्वबोधरूपत्वसुखत्वादिषु प्रमाणमिति** । यथासंभवमन्तर्बहिर्गतानां सत्त्वादीनां तस्यैव संवेदनस्य विकल्पोत्थापनद्वारेण व्यवस्थापकत्वात्, यद्यस्य व्यवस्थापने हेतुस्तत्तत्र प्रमाणमिति हि प्रमाणस्थितिः । आदिशब्दान्नीलत्वादिग्रहः । **अप्रमाणमिति** । क्षणक्षयित्वादिविषये विकल्पोत्थापनाभावात् । तथा च तत्सिद्धान्तः– यत्रैव जनयेदेनां तत्रैवास्य प्रमाणता इति ।

**स्वप्नादीति** । आदिशब्दात् जाग्रद्दशभाविनो मरीचिकादौ जलादिज्ञानस्य परिग्रहः । **अयमिति** अनेकान्तप्रकाशः । **कथमदृष्टेत्यादि** । तस्याद्वयसंवेदनस्य कार्यं तत्कार्यम्,

भ्रान्ताभ्रान्तसंवेदनविवेकस्य कर्तुमशक्यत्वात्, संविन्मात्रस्य तु सर्वत्राव्यभिचारित्वाद् अद्वयं संवेदनं विविक्तयुक्त्या प्रकाशमानमनादिकालालीनवासनासमुपजनितसंवृतिदर्शितसत्ताकं सितासितादिविविधप्रतिभासं निराकुरुते। अत्र प्रतिविदध्महे–किमयमनेकाकारो बोधोऽद्वयसंवेदनाद् व्यत्यरैक्षीद् वा न वा, किं चातो यदि व्यभैत्सीत्, कथमदृष्टतत्कार्यत्वे व्यतिरिक्तोऽयं तदद्वयसंवेदनमनुमापयेत्। अव्यतिरेकपक्षे पुनरनेकः सन् एकसंवेदनतादात्म्येन प्रथमानः कथमद्वैतं नोद्दलयेत्। अथ संवृतिदर्शितत्वादलीकतया अस्य सितासिताद्याकारबहिर्मुखकालुष्यस्य बोधेन तात्त्विकेन सह भेदाभेदविकल्पानुपपत्तिरिति ब्रूषे, तथा सति परो बोधस्यापारमार्थिकत्वं अविद्यादर्शितत्वात्, अर्थसत्तायाः पुनस्तत्त्वरूपता, सर्वत्राव्यभिचारादिति ब्रुवाणो दुर्निवारः स्यात्। जडस्य प्रकाशायोगात् संवित्तिः सत्या, नार्थ इति चेत्, एकस्यानेकतावभासाभावादनेकान्तः सत्यः, नाद्वैतमिति प्रतिजानीमहे। संवृत्याद्वयस्यापि नानाप्रतिभासोऽविरुद्ध इति चेत्, अनाद्यविद्याबलाज्जडस्यापि चेतनतया प्रकाशो न विरुद्ध इति परस्यापि शठोत्तरं नातिदुर्लभं भवेत्। किं च नानाकारकलुषितचैतन्यसामान्यस्यान्यथानुपपत्तिसामर्थ्यतस्तस्य सिद्धत्वादद्वयसंवेदनमसिद्धं साधयेदयम्, अन्यथा निरिन्धनतया साधनस्याप्रवृत्तेः, तथा च स्थिरस्थूराद्युपलक्षितार्थांशवशाद् विशकलितपरमाणुक्षणक्षयिपर्यायतादात्म्यं साधयन्तमनेकान्तवादिनं न प्रतिक्षेप्तुमर्हति, युक्तेरुभयत्रापि तुल्यत्वात्। किं च, योऽयं सितपीताद्यने-

---

तत्स्वभावः तत्कार्यत्वम्, न दृष्टं तत्कार्यत्वं यस्य स तथा, अयमनेकाकारो बोधः। अयमभिप्रायः– भवदाशयेनायमनेकाकारो बोधः, एकस्यानेकधर्मत्वायोगाद् बाधित एव; परमसौ बाधितोऽप्यनेकाकारो बोधोऽद्वयं न भवति। अद्वयमनुमापयेद् यद्यद्वयस्य कार्यं स्यात्। **अद्वैतमिति।** द्वाभ्यां प्रकाराभ्यामितं स्थितं द्वौ वा प्रकाराविते प्राप्तं द्वीतम्; ततः प्रज्ञादेराकृतिगणत्वात् अण्, यदि वा द्वयोर्भावो द्विता ततः पूर्ववत् स्वार्थे अणि "प्रकृतेर्लिङ्गवचने बाधन्ते स्वार्थिकाः क्वचित्"– इति वचनाद् नपुंसकत्वं, ततो नञ्समासः। **अस्येति।** अनेकाकारबोधस्य। **सितासिताद्याकारबहिर्मुखकालुष्यस्येति।** सितासितादय आकारा यस्य तत्तथा, सितासिताद्याकारबहिर्मुख कालुष्य मालिन्य यस्य तस्य। **नानाकारकलुषितेत्यादि।** अयं ज्ञानाद्वैतवादी नानाकारकलुषितचैतन्यसामान्यस्याद्वयसंवेदनान्यथानुपत्तिसामर्थ्यतोऽसिद्धं सदद्वयसंवेदनं साधयेत्, न चाद्वयज्ञानवादिनो नानाकारकलुषितस्य चैतन्यसामान्यस्य हेतुतयाभिधीयमानस्याद्वित्वेन तदासिद्धम्, यदसिद्धेन साध्यते इति दोषः, यत आह **तस्य सिद्धत्वादिति।** यद्यपि नानाकारा अलीकास्तथापि नीलपीतादिज्ञानेष्वनुगतं चैतन्यमात्रं सिद्धमेव, आकारालीकत्वादेव च न नानाकारकलुषितमित्युक्तम्। **अन्यथेति।** तदा नानाकारकलुषितं चैतन्यसामान्यं सिद्धं नाभ्युपगम्यते, तदा निर्हेतुकतया द्वयविज्ञानसाधकमनुमानं प्रवर्तेत। **किं चेत्यादि।** अयमभिप्रायः किल— सितपीताद्यनेकाकार-

**काकारनिर्णयो**ऽसावपि स्वसंवेदनापेक्षयाद्वयरूप इति भवदभिप्रायः, यथा चानवस्थाभीरुतया सर्वं ज्ञानं स्वप्रकाशमभ्युपेतम्, तथा सर्वो निश्चयः स्वनिश्चायकोऽभ्युपगन्तव्यः, अन्यथा तत्राप्यनवस्थादोषोऽनुषज्येत, निश्चयाश्च सर्वथा स्वरूपं निश्चिनुयुः, नैकदेशेन, यतो निश्चयैर्यन्न निश्चीयते रूपं तत्तेषां विषयः कथमिति स्वयमेव स्ववधाय प्रलपितम्, तथा चाद्वयस्य क्षणक्षयिरूपस्य तैर्ग्रहणे विपरीतारोपाभावात्तदित एव अनुत्थानं संसारस्येति युक्तिरिक्त एवामुक्ताभिमानः स्यात्। न चैवम्, भवभावस्य प्रतिप्राणिप्रसिद्धत्वात्। तन्नायमितरेतराविनिर्लुठितद्रव्यपर्यायप्रकाशो भ्रान्तः, तद्विपरीतार्थोपस्थापकप्रमाणान्तराभावादिति स्थितम्। यदा तु शून्यवादी निरालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति पराभिप्रायप्रवृत्तानुमानबलाद् भ्रान्ततामस्य कथयेत्, तदा तं प्रति सालम्बनाः सर्वे प्रत्ययाः प्रत्ययत्वात् जाग्रद्दशाप्रत्ययवदिति विपरीतानुमानमुपढौकनीयम्। स यदि दृष्टान्तस्य साध्यविकलतामुद्भावयेत्, तदा तद्दृष्टान्तेऽपि सा दर्शनीया। यदि पुनरसौ स्वप्नप्रत्ययस्य निरालम्बनत्वं भवद्भिरभिप्रेतमिति विलपन्नासितुं न दद्यात्, तदा स विकल्पतः पर्यनुयोज्यः— अस्मदभ्युपगमः प्रमाणं भवतोऽप्रमाणं वा; प्रमाणं चेत्, यथा तद्बलाद् दृष्टान्तसमर्थनं तथा जाग्रत्प्रत्ययगोचरार्थसमर्थनमपि किं न कुरुषे, कोऽयमर्धजरतीयन्यायः। अथाप्रमाणम्, एवं सति स्वप्नप्रत्ययनिरालम्बनतासाधकं प्रमाणान्तरं मृगणीयम्, किमनेन कुशकाशावलम्बनेन। तत्रापि प्रमाणान्तरे विकल्पयुगलममलमवतरति, तत् किं निरालम्बनम्, सालम्बनं वा; निरालम्बनं चेत्, नाम्यप्रत्ययस्य निरालम्बनतां गदितुं पटिष्ठं निर्गोचरत्वात्। अथ सालम्बनम्, हन्त हतोऽसि, निरालम्बनाः सर्वे प्रत्यया इति प्रतिज्ञातक्षतेः, अनेनैव व्यभिचारादिति शठः प्रतिशठाचरणेन निर्लोठनीयः। तन्नास्यानैकान्तिकत्वम्। विरुद्धताशङ्का पुनर्दूरापास्तप्रसरैव, प्रमाणप्रकाशितेऽर्थे सर्ववादिनां तथाभ्युपगमाविगानादिति। अनेन संशयविरोधानवस्थावैयधिकरण्यासंभवादिदूषणानि निर्मूलकमिथ्याविकल्पोत्थापिता-

निर्णयः स्वसंवेदनापेक्षया भवदभिप्रायेणाद्वयरूपः, अनवस्थाभयाच्च स्वयं निर्णयेन स्वरूपं निर्णेतव्यम् तदपि सर्वथा, अन्यथा सितपीतादिनिर्णयेन यत् सितपीतादिनिर्णयरूपं स्वरूपं न निर्णीयते, अद्वयात्मकमपि तदात्मना तत् स्वरूप तस्य निर्णयस्य विषयः कथम्? नैव स्यादित्यर्थः। एवं चाद्वये गृहीते अनेकाकारारोपाभावादनुत्थानं संसारस्येति। **पराभिप्रायेति**। परोऽभ्युपगतानुमानो जैनादिः। **अनेनेति**। प्रमाणनिर्णीतेऽविसंवादेन। **संशयविरोधानवस्थावैयधिकरण्यासंभवादिति**। नित्यानित्याद्यनेकधर्मकत्वे वस्तुनोऽभ्युपगम्यमाने नित्यवस्तुनोऽभ्युपगम्यमाने नित्यमिदं वस्त्वनित्यं चेत्येकस्यावधारणद्वारेण निर्णीतेरभावात् संशयः। तथा यदेव वस्तु नित्यं तदेवानित्यमिति विरोधः, नित्यानित्ययोः परस्परपरिहारेणावस्थानात्। यदि पुनर्नित्यमनित्यात्मना, अनित्यं नित्यरूपतया व्यवस्थितं स्यात्; तदा

नि प्रतिभासमुद्गरनिपातनिर्दलितमस्तकत्वान्न जीवितुमुत्सहन्ते इति। तस्माद-सिद्धतादिदोषादिना कृतोऽयं तथाप्रतिभासलक्षणो हेतुरनेकान्तगोचरतां प्रमाणस्य परानभ्युपगमयति, इत्यलं विस्तरेण। तस्मात्तस्यैव तत्र प्रतिभासनात् सर्वसंविदा-मनेकान्तात्मकं वस्तु गोचर इति स्थितम् ॥

अयं च यथावस्थितप्रमाणव्यापारपर्यालोचकप्रमात्रभिप्रायेण प्रमाणगोचरो दर्शितः। नयस्तर्हि किंभूतं मन्यते इति वचनावकाशे सत्याह – 'एक' इत्यादि। अनन्तधर्माध्यासितं वस्तु स्वाभिप्रेतैकधर्मविशिष्टं नयति प्रापयति संवेदनमारोहयतीति नयः, प्रमाणप्रवृत्तेरुत्तरकालभावी परामर्श इत्यर्थः। तस्य विषयो गोचरोऽभिमतः अभिप्रेतैकदेशेनानित्यत्वादिधर्मलक्षणेन विशिष्टः पररूपेभ्यो व्यवच्छिन्न इत्यर्थः। अर्थः प्रमेयरूपः, प्रमाणमेवंविधमेवार्थं गृह्णाति– इति स्वाकूतेन तेन व्यवस्थापनादिति। अथ चाप्रमाणविषयां लक्षणसंख्यागोचरफलरूपां चतुर्विधां विप्रतिपत्तिं निराकृत्य अत्रैव नयगोचरं निरूपयन्नाह– एकेत्यादि। ननु चादिवाक्यतः प्रमाणव्युत्पादनमात्रं प्रतिज्ञातं तत् किमयमप्रस्तुतोऽत्र नयगोचरः प्रतिपाद्यते इति। सत्यम्, एवं मन्यते– न नयः प्रमाणादत्यन्तं दूरयायी, किं तर्हि तदंशभूत एव, नयसमुदायसंपाद्यत्वात् प्रमाणस्य, अतस्तद्व्युत्पादनप्रतिज्ञातेऽसावपि तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायाद् गृहीत एव, तन्नायमप्रस्तुत इति। अत्रापि

---

नित्यानित्यत्वयोरविशेषात् प्रतिनियतव्यवहारोच्छेदः। तथा येनांशेन नित्यं तेनांशेन किं नित्यमेव, आहोस्वित् तेनाप्यंशेन नित्यमनित्य वेति। तत्राद्यपक्षे अनेकान्तक्षतिः। द्वितीयपक्षे पुनरपि येनांशेन नित्यं तेनांशेन किं नित्यमेव, आहोस्वित् तेनापि नित्यमनित्य वेति अनवस्था। एवमनित्यपक्षेऽपि सर्वमेतद् भावनीयम्। तथा भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। यथा नीलोत्पलमित्यत्र एकस्मिन् उत्पलद्रव्ये नीलगुणं निमित्तीकृत्य नीलशब्दः प्रवर्तते, उत्पलत्वजाति चाश्रित्योत्पलशब्दः, ततो भवति नीलोत्पलशब्दयोर्भिन्नप्रवृत्तिनिमित्तयोरेकस्मिन्नर्थे वृत्तत्वात् सामानाधिकरण्यम्। अत्र तु नित्यत्वानित्यत्वादिधर्माणां द्रव्यादभेदेऽभ्युपगम्यमाने यदेव नीलधर्मात्मकं वस्तु नीलशब्दप्रवृत्तिनिमित्तं तदेव सदृशपरिणामलक्षणोत्पलत्वजात्यात्मकत्वमुत्पलशब्दस्यापि प्रवृत्तिनिमित्तम्। तन्नानेकान्ताभ्युपगमेऽभिन्नप्रवृत्तिनिमित्तत्वात् सामानाधिकरण्यलक्षणं घटते, तदभावाच्च वैयधिकरण्यमिति। तथासंभवोऽपि, संशयविरोधाद्युक्तयुक्तेः, एकस्य वस्तुनो नित्यानित्याद्यनेकधर्मालिङ्गितत्वाभावात्, अतो न नित्यमनित्यं च तदेव वस्तु भवति इति। आदिशब्दात् प्रत्यक्षादिबाधापरिग्रहः ॥

**प्रमाणप्रवृत्तेरुत्तरकालभावीति।** प्रत्यक्षादिप्रमाणेन यथावस्थितवस्तुस्वरूपग्रहणादनन्तरमिदं नित्यमिदमनित्यमित्यादिस्वाशयेन वस्त्वंशपरामर्श इत्यर्थः। **एवंविधमेवे-त्यादि।** नयदुर्नययोः किंचित् साम्यादिभेदेनैव लक्षणाभिधानादेवमाह। यद्वा 'गृह्णात्येव'

पदार्थः स एव, केवलं वाक्यार्थभेदः। तथा हि– इहैवं घटना। नयस्य विषय एकदेशविशिष्टोऽर्थो मतो नीतिविदामिति। ननु च यदि नयस्य प्रमाणान्तःपातित्वेऽपि पृथग् गोचरः प्रतिपाद्यते, ततः प्रमाणवदेतद्विषया लक्षणादिविप्रतिपत्तिरपि निराकर्तव्या। सत्यम्, किं तु न परेषां नयव्यवहारः प्रसिद्धः, अतो धर्मिणोऽभावात् तद्गोचरा विप्रतिपत्तिर्नास्त्येव। न च ते तेन तत्त्वं प्रतिपादनीयाः, तत्त्वप्रतिपादने प्रमाणस्यैव व्यापारात्, नयस्य पुनरेकदेशनिष्ठत्वेन तत्प्रतिपादनसामर्थ्यविकलत्वात्, अत एवाचार्यस्य न तल्लक्षणादिस्वरूपकथनेऽपि महानादरः। गोचरं पुनर्हेयपक्षे काक्वा प्रक्षिपन् साक्षात् प्रतिपादयति– मा भूत् स्वदर्शनान्तःपातिनां मन्दबुद्धीनां प्रमाणप्रतिपन्नेऽप्यनेकान्तात्मके वस्तुन्येकदेशसमर्थनाभिनिवेशलक्षणः कदाग्रह इति। अथवा स्वदर्शनान्तःपातिनः प्रति अनेनैव गोचरकथनेनोपलक्षणत्वाल्लक्षणादीन्यपि लक्षयति। तत्र प्रमाणप्रतिपन्नार्थैकदेशपरामर्शो नय इति लक्षणम्, सर्वनयविशेषानुयायित्वात्पररूपव्यावर्तनक्षमत्वाच्चास्य। संख्यया पुनरनन्ता इति, अनन्तधर्मत्वाद्वस्तुनः, तदेकदेशधर्मपर्यायावसिताभिप्रायाणां च नयत्वात्, तथापि चिरंतनाचार्यैः सर्वसंग्राहिसत्ताभिप्रायपरिकल्पनाद्वारेण सप्त नयाः प्रतिपादिताः। तद्यथा– नैगमसंग्रहव्यवहारर्जुसूत्रशब्दसमभिरूढैवंभूता नयाः इति। अतोऽस्माभिरपि ते एव वर्ण्यन्ते। कथमेते सर्वाभिप्रायसंग्राहकाः इति चेत्, उच्यते। अभिप्रायस्तावदर्थद्वारेण शब्दद्वारेण वा प्रवर्तेत, गत्यन्तराभावात्, अर्थश्च सामान्यरूपो विशेषरूपो वा, शब्दोऽपि रूढितो व्युत्पत्तितश्च, व्युत्पत्तिरपि सामान्यनिमित्तप्रयुक्ता तत्कालभाविनिमित्तप्रयुक्ता वा स्यात्। तत्र ये केचनार्थनिरूपणप्रवणाः प्रमात्रभिप्रायास्ते सर्वेऽप्याद्ये नयचतुष्टयेऽन्तर्भवन्ति, तत्रापि ये परस्परविशकलितौ सामान्यविशेषाविच्छन्ति तत्समुदायरूपो नैगमः। ये पुनः केवलं सामान्यं वाञ्छन्ति तत्समूहसंपाद्यः संग्रहः। ये पुनरनपेक्षितशास्त्रीयसामान्यविशेषं लोकव्यवहारमवतरन्तं घटादिकं पदार्थमभिप्रेयन्ति तन्निचयजन्यो व्यवहारः। ये सौगतास्तु क्षणक्षयिणः परमाणुलक्षणा विशेषाः सत्या इति मन्यन्ते, तत्संघातघटित ऋजुसूत्र इति। तथा ये मीमांसकाः रूढितः शब्दानां प्रवृत्तिं वाञ्छन्ति तन्निवहसाध्यः शब्द इति। ये तु व्युत्पत्तितो ध्वनीनां प्रवृत्तिं वाञ्छन्ति नान्यथा, तद्द्वारजन्यः समभिरूढ इति।

---

इत्यत्र एवशब्दो द्रष्टव्यः। केवलं वाक्यार्थभेद इति। तथा हि– पूर्वस्मिन् वाक्यार्थे नयस्य कर्तृभूतस्यैकदेशविशिष्टोऽर्थो विषयो मतः, अस्मिंस्तु वाक्यार्थे नयस्य संबन्धी विषयो नीतिविदां कर्तृभूतानामेवंविधोऽभिप्रेत इति स्पष्टो वाक्यार्थभेदः।

तत्समुदायरूपो नैगम इति। पूर्वं हि ये परस्परविशकलितौ सामान्यविशेषाविच्छन्ति इति बहुवचनेन निर्देशे नैगमे इत्येकवचनान्तत्वात् नात्र सुश्लिष्टो वाक्यार्थः स्यादिति तत्समुदायरूप इत्युक्तम्। एवं तत्समूहादिशब्देष्वपि भावनीयम्।

ये तु वर्तमानकालभाविव्युत्पत्तिनिमित्तमधिकृत्य शब्दाः प्रवर्तन्ते नान्यथेति मन्यन्ते, तत्संघटितः खल्वेवंभूत इति । तदेवं न स कश्चन विकल्पोऽस्ति वस्तुगोचरो योऽत्र नयसप्तके नान्तर्यातीति सर्वाभिप्रायसंग्राहका एते इति स्थितम् ।

सांप्रतमेषामेव प्रत्येकं मतमुपवर्णयामः—तत्र गमनं गमः परिच्छेद इत्यर्थः, निश्चितो गमः निगमः विविक्तवस्तुग्रहणं, स एव प्रज्ञादेराकृतिगणतया स्वार्थिकाण्प्रत्ययविधानाद् नैगमः । यदि वा, निगम्यन्ते नियतं परिच्छिद्यन्ते इति निगमाः अर्थास्तेषु भवोऽभिप्रायो नियतपरिच्छेदरूपः स नैगम इति । अयं हि सत्तालक्षणं महासामान्यमवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि, तथान्त्यान् विशेषान् सकलासाधारणरूपलक्षणानवान्तरविशेषांश्चापेक्षया पररूपव्यावर्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपानभिप्रैति । तथा हि किल – संविन्निष्ठाः पदार्थव्यवस्थितयः, न च सामान्यग्राहिणि विज्ञाने विशेषावभासोऽस्ति, अनुवर्तमानैकाकारपरामर्शेन तद्ग्रहणाद्, अन्यथा सामान्यग्राहकत्वायोगात्, नापि विशेषग्रहणदक्षे संवेदने सामान्यं चकास्ति, विशिष्टदेशदशावच्छिन्नपदार्थग्राहितया तत्प्रवृत्तेः, अन्यथा विशेषसंवेदनत्वायोगात् । न चैतौ परस्परविभिन्नावपि प्रतिभासमानौ सामान्यविशेषौ कथंचिन्मिश्रयितुं युक्तौ, अतिप्रसङ्गात्, विभिन्नप्रतिभासिनामपि निखिलार्थात्मनामैक्यप्राप्तेः । एवं च प्रमाणयति – परस्परविश्लिष्टौ सामान्यविशेषौ, पार्थक्येनोपलब्धेः, इह यद्यत् पार्थक्येनोपलभ्यते तत्तत् परस्परविश्लिष्टं द्रव्यम्, तद्यथा–देवदत्तयज्ञदत्ताविति, पार्थक्येन चोपलभ्येते सामान्यविशेषौ, अतः परस्परविभिन्नाविति । न सामान्यात् पृथग्विशेषोपलम्भ इति चेत्, कथं तर्हि तस्योपलम्भ इति वाच्यम्, सामान्यव्याप्तस्येति चेत्, न तर्हि स विशेषोपलम्भः, सामान्यस्यापि तेन ग्रहणात्, ततश्च तेन बोधेन विविक्तविशेषग्रहणाभावात् तद्वाचकं ध्वनिं तत्साध्यं च व्यवहारं न प्रवर्तयेत् प्रमाता, न चैतदस्ति, विशेषाभिधानव्यवहारयोः प्रवृत्तिदर्शनात्, तस्माद्विशेषमभिलषता तत्र च व्यवहारं प्रवर्तयता तद्ग्राहको बोधो विविक्तोऽभ्युपगन्तव्यः । तथा सामान्यमपि विविक्ताकारतया स्वग्राहिणि ज्ञाने यदि न प्रकाशेत, तदा तद्गोचराभिमतसंवेदनेन विशेषस्याप्याकलनात् सामान्याभिधानव्यवहारयोः प्रवृत्तेरुच्छेदस्तथैव वक्तव्यः, विविक्तसामान्यग्राहिबोधमूलकत्वात्तयोः, तदनिष्टौ तयोरप्यभावापत्तेः । न च सामान्यं विशेषं वा तिरस्कृत्य

---

तथा अन्त्यान् विशेषानिति । उत्पादविनाशयोरन्ते व्यवस्थितत्वाद् अन्तानि नित्यद्रव्याणि तत्र भवास्तान् । अयमर्थः– तुल्यरूपरसगन्धस्पर्शेषु परमाणुषु नित्यत्वामूर्तत्वसर्वगतत्वादिभिस्तुल्येषु सर्वात्मसु चायमस्माद्विलक्षण इति यतो योगिनां प्रत्ययः स प्रतिपरमाणु प्रत्यात्म च विशेष इति ।

तयोरिति । उभयत्रापि सामान्याभिधानव्यवहारयोः । तदनिष्टाविति । केवलसा-

केवलस्य विशेषस्य सामान्यस्य वाभ्युपगमः कर्तुं युक्तः, द्वयोरपि स्वग्राहिज्ञाने प्रतिभासमानतया विशेषाभावात्। तस्मादेतौ द्वावपीतरेतरविशकलितावङ्गीकरणार्हाविति नैगमः ॥

अधुना संग्रहाभिप्रायो वर्ण्यते। तत्र संगृह्णाति अशेषविशेषतिरोधानद्वारेण सामान्यरूपतया जगदादत्ते इति संग्रहः। अयं हि मन्यते — भावलक्षणसामान्याद् व्यतिरिच्यमानमूर्तयो वा विशेषाः परिकल्प्येरन्, अव्यतिरिच्यमानमूर्तयो वा, गत्यन्तराभावात्। तत्र यद्याद्यः पक्षः, तदा निःस्वभावतां ते स्वीकुर्युः, भावव्यतिरेकित्वात्, गगनकुसुमादिवत्। अथ द्वितीयः कल्पः, तर्हि भावमात्रमापद्यन्ते। तथा हि--भावमात्रं विशेषाः। तदव्यतिरिक्तत्वाद्, इह यद्यतोऽव्यतिरिक्तं तत्तदेव भवति, तद्यथा भावस्यैव स्वरूपम्, अव्यतिरेकिणश्च विशेषाः, अतस्तद्रूपा एव। ननु च यदि भावमात्रमेव तत्त्वं तदा तस्य सर्वत्राविशेषाद् य एते प्रतिप्राणि प्रसिद्धाः स्तम्भेभकुम्भाम्भोरुहादिविशिष्टवस्तुसाध्या व्यवहारिणस्ते सर्वेऽपि प्रलयमापद्येरन्, अतो विशेषा अपि विविक्तव्यवहारहेतवोऽभ्युपगन्तव्याः। नैतदस्ति, व्यवहारस्याप्यनाद्यविद्याबलप्रवर्तितत्वात्, तेन पारमार्थिकप्रमाणप्रतिष्ठिततत्त्वप्रतिबन्धाभावात्। किं च विशेषाग्रहो विशेषेण त्याज्यः, विशेषव्यवस्थापकप्रमाणाभावात्। तथा हि– भेदरूपा विशेषाः, न च किंचित्प्रमाणं भेदमवगाहते, प्रत्यक्षं हि तावद्भावसंपादितसत्ताकं तमेव साक्षात्कर्तुं युक्तं नाभावम्, तस्य सकलशक्तिविरहरूपतया तदुत्पादने व्यापाराभावात्, अनुत्पादकस्य च साक्षात्करणे सर्वसाक्षात्करणप्रसङ्गात्, तथा च विशेषाभावात् सर्वो द्रष्टा सर्वदर्शी स्यात्, अनिष्टं चैतद् भवताम्, तस्माद् भावग्राहकमेव तदेष्टव्यम्। स च भावः सर्वत्राविशिष्ट इति तथैव तेन ग्राह्यः, तदुत्तरकालभावी पुनर्विकल्पो 'घटोऽयं पटादिर्न भवति' इत्येवमाकारो व्यवहारं रचयन् अविद्यामूलत्वान्न प्रमाणम्, तन्न प्रत्यक्षाद्विशेषावगतिः। नाप्यनुमानादेः, प्रत्यक्ष-

मान्यग्राहिबोधानिष्टौ। अत्र नैगमाभिप्रायसंग्रहश्लोकः—

अन्यदेव हि सामान्यमभिन्नज्ञानकारणम्।
विशेषोऽप्यन्य एवेति मन्यते नैगमो नयः ॥

**सामान्यरूपतया जगदादत्ते इति**। सर्वमेकम्, सदविशेषादिति हि तत्सिद्धान्तः। **प्रत्यक्षं हीति**। यदाहुस्तद्वादिनः—

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।
नैकत्व आगमस्तेन प्रत्यक्षेण प्रबाध्यते ॥

संग्रहश्लोकः—

सद्रूपतानतिक्रान्तस्वस्वभावमिदं जगत्।
सत्तारूपतया सर्वं संगृह्णन् संग्रहो मतः।

मूलकत्वाच्छेषप्रमाणवर्गस्य, तस्मात् सामान्यमेव परमार्थो न विशेषा इति संग्रहः ॥

सांप्रतं व्यवहारमतमुच्यते– तत्र व्यवहरणं व्यवह्रियते वानेन लौकिकैरभिप्रायेणेति व्यवहारः। अयं तु मन्यते– यथालोकग्राहमेव वस्त्ववस्तु, किमनयादृष्टाव्यवह्रियमाणवस्तुपरिकल्पनकष्टपिष्टिकया? यदेव च लोकव्यवहारपथमवतरति तस्यानुग्राहकं प्रमाणमुपलभ्यते, नेतरस्य, न हि सामान्यमनादिनिधनमेकं संग्रहाभिमतं प्रमाणभूमिः, तथानुभवाभावात्, सर्वस्य सर्वदर्शित्वप्रसङ्गाच्च। नापि विशेषाः परमाणुलक्षणाः क्षणक्षयिणः प्रमाणगोचरः, तथा प्रवृत्तेरभावात्। तस्मादिदमेव निखिललोकाबाधितं प्रमाणप्रसिद्धं कियत्कालभाविस्थूरतामाबिभ्राणमुदकाहरणाद्यर्थक्रियानिर्वर्तनक्षमं घटादिकं च वस्तुरूपं पारमार्थिकमस्तु, पूर्वोत्तरकालभावितत्पर्यायपर्यालोचना पुनरज्यायसी, तत्र प्रमाणप्रसराभावात्, प्रमाणमन्तरेण च विचारस्य कर्तुमशक्यत्वात्, अवस्तुत्वाच्च तेषां किं तद्गोचरपर्यालोचनेन? तथा हि– पूर्वोत्तरकालभाविनो द्रव्यविवर्ताः क्षणक्षयिपरमाणुलक्षणा वा विशेषा न कंचन लोकव्यवहारमुपरचयन्ति, तन्न ते वस्तुरूपाः, लोकव्यवहारोपयोगिनामेव वस्तुत्वात् इति व्यवहारः ॥

सांप्रतं ऋजुसूत्राभिप्रायः कथ्यते– तत्र ऋजुप्रगुणमकुटिलमतीतानागतवक्रपरित्यागाद्वर्तमानक्षणविवर्ति वस्तुनो रूपं सूत्रयति निष्टङ्कितं दर्शयतीति ऋजुसूत्रः। तथा हि– अस्याभिप्रायः। अतीतस्य विनष्टत्वात् अनागतस्यालब्धात्मलाभत्वात् खरविषाणादिभ्योऽविशिष्यमाणतया सकलशक्तिविरहरूपत्वान्नार्थक्रियानिर्वर्तनक्षमत्वम्, अर्थक्रियाक्षमं च वस्तु, तदभावान्न तयोर्वस्तुत्वमिति, वर्तमानक्षणालिङ्गितं च पुनर्वस्तुरूपं समस्तार्थक्रियासु व्याप्रियते इति तदेव पारमार्थिकम्। तदपि च निरंशमभ्युपगन्तव्यम्, अंशव्याप्तेर्युक्तिरिक्तत्वाद्, एकस्यानेकस्वभावतामन्तरेणानेकस्वावयवव्यापनायोगात्। अनेकस्वभावतैवास्त्विति चेन्न विरोधाघ्रातत्वात्। तथा हि–यद्येकः स्वभावः कथमनेकः अनेकश्चेत् कथमेकः? एकानेकयोः परस्परपरिहारेणावस्थानात्, तस्मात् स्वरूपनिमग्नाः परमाणव एव परस्परोपसर्पणद्वारेण कथंचिन्निचयरूपतामापन्ना निखिलकार्येषु व्यापारभाज इति त एव स्वलक्षणम्, न स्थूरतां धारयत्पारमार्थिकमिति। किं च प्रमाणतोऽर्थव्यवस्था, न च प्रमाणं देश-

---

यथालोकग्राहमिति। ग्राहयतीति ग्राहोऽभिप्रायः, पचाद्यच्, लोकाभिप्रायविशेषः, तस्यानतिक्रमेणेति।

संग्रहश्लोकः–

> व्यवहारस्तु तामेव प्रतिवस्तुव्यवस्थिताम्।
> तथैव दृश्यमानत्वाद् व्यवहारयति देहिनः ॥

तामिति सत्तारूपताम्। शेषं सुगमम्।

**कालव्याप्तिग्रहणे किंचन प्रवर्तते, सर्वप्रमाणानां वर्तमानप्रकाशरूपत्वात् । तथा हि-प्रत्यक्षं तावद्रूपालोकमनस्कारचक्षुर्लक्षणकारणचतुष्टयाल्लब्धसत्ताकं वर्तमानक्षणे एव प्रकाशते, अतीतवस्त्वर्थक्षणयोरसंनिहितत्वात्, ततश्च तत् तत्कालसंबद्धमेव वस्तुनो रूपं साक्षात्कर्तुं क्षमते न पूर्वमपरं वा, असंनिधानादेव । यदि पुनर्विनष्टमपि पूर्वक्षणवर्तिरूपमाकलयेत् , तदा विनष्टत्वाविशेषान्निरवधिः क्षणपरंपरा तत्र प्रतीयेत, तथा च सति संकलिकया अनादिजन्मपरंपराग्राहि प्रत्यक्षमनुषज्येत, एवमनागत-क्षणग्रहणेऽपि योज्यम्, अनिष्टं चैतत्, तस्मात् तद्वार्तमानिकक्षणग्रहणदक्षमेवास्य-भ्युपगन्तव्यम् । ननु च यदि क्षणभङ्गुरतामर्थात्मनामध्यक्षमेव लोकयति, तदा नीलतेव प्रतिभासमाना सा विप्रतिपत्तिगोचरं न यायादिति तद्विषयो लौकिकानां व्यवहारः प्रवर्तेत, न चैतदस्ति, स्थिरताद्वारेण व्यवहारप्रवृत्तेरिति । अत्र प्रतिविधी-यते— साक्षात्कुर्वाणा अपि क्षणविनश्वरतां सदृशापरापरोत्पत्तिविप्रलब्धबुद्धयो मन्दा नाध्यवस्यन्ति अनादिकालप्ररूढवासनाप्रबोधसमुपजनितमिथ्याविकल्पसामर्थ्याच्च विपर्यस्तस्थिरताव्यवहारं प्रवर्तयन्ति, तन्नायमध्यक्षस्यापराधः, अपि तु प्रमातॄणा-**

**देशकालव्याप्तीति** । एकस्यानेकावयवव्याप्तिर्देशव्याप्तिः, एतावता स्थूरत्वमुक्तम्, एकस्यानेकक्षणव्याप्तिः कालव्याप्तिः, अनेन तु स्थिरत्वमभिहितम् । तत्र कालव्याप्तेरनन्तर-त्वेन संनिहितत्वाद् यथाकथंचिदर्थप्रकाशस्य वा विवक्षितत्वात् । **सर्वप्रमाणानामित्या-**दिना तावत् कालव्याप्तिं दूषयितुमारभते – **वर्तमानप्रकाशरूपत्वादिति** । वर्तमानः पूर्वा-परसमयविविक्तः, प्रकाशः परिच्छेदो रूपं येषां प्रमाणानां तेषां प्रमाणानां तेषां भावस्तत्त्वं तस्मात् । इदमत्र हृदयम् – परिच्छेदकं हि प्रमाणमेकक्षणवर्त्येव, ततस्तेन परिच्छिद्यमानोऽ-र्थोऽपि स्वैकक्षणवर्त्येव परिच्छेत्तव्यः, न पूर्वापरक्षणवर्ती, तस्य परिच्छेदकप्रमाणकालेऽभा-वात्, तत्काले च परिच्छेदकप्रमाणस्यासत्त्वादिति ।

**तदिति** प्रत्यक्षम् । **तत्कालसंबद्धं** वर्तमानकालसंगतम् । वर्तमानकालपरिगतवस्तु-ग्राहित्व चाध्यक्षस्य वैभाषिकाभिप्रायेण, क्षणक्षयाद्यवस्थितत्वलक्षणत्वाद्वस्तुनः, अन्यथा चक्षुरिन्द्रियसंनिकृष्टादर्थादुत्पद्यमानस्य द्वितीयक्षणभाविनो ज्ञानस्य न प्राक्क्षणवर्तिरूपग्राह-कत्वेन वर्तमानवस्तुग्राहकत्वं स्यात् । सौत्रान्तिकाभिप्रायेण वस्तुजन्यज्ञानगतग्राह्याकारलक्ष-णमेव वस्तुनो रूपं साक्षात्कर्तुं क्षमते इति व्याख्या । 'वस्त्वाहितमात्मगतमाकारं प्रत्यक्षं परिच्छिनत्ति ' - इति हि सौत्रान्तिकानां सिद्धान्तः । यदाहुस्तद्वादिनः—

अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते
प्रत्यक्षो न हि बाह्यवस्तुविसरः सौत्रान्तिकैराश्रितः ।
योगाचारमतानुगैरभिहिता साकारबुद्धिः परा
मन्यन्ते बत मध्यमाः कृतधियः स्वच्छां परं संविदम् ॥ इति ॥

तत्र सौत्रान्तिकयोगाचारशब्दौ पूर्वमेव दत्तार्थौ । वैभाषिकमध्यमशब्दौ त्वेवं

मेव। तथा हि— घनाकारोऽपि प्रत्यक्षपृष्ठभाविमिथ्याविकल्पसंदर्शित एव, विविक्त-दर्शने तत्प्रतिभासायोगात्, करचरणशिरोग्रीवादयो ह्यवयवाः परस्परविभक्ता एव तत्र प्रतिभान्ति, न व्याप्याकारः, न च तेऽपि स्वांशव्यापिनः प्रतिभान्ति, तदवयवानामपीतरेतरविशकलितरूपाणां प्रतिभासता तावत् यावत्परमाणव एव प्रथन्ते, व्यापिरूपस्य विचाराक्षमत्वादित्युक्तप्रायम्। नाप्यनुमानात्स्थिरस्थूरवस्तु-सिद्धिः, प्रत्यक्षपरिगृहीतं हि संबन्धमासाद्यानुमानं प्रवर्तते, यदा च तत्क्षणभङ्गुर-विविक्तांशग्रहणचातुर्यमाबिभ्रद् दर्शितं तदानुमानमपि तत्प्रतिबन्धमूलकं तद्गोचर-मेव पारंपर्येण प्रतिष्ठापयति, स्वप्रतिभासिनो रूपस्यालीकतया तत्प्रतिष्ठापनद्वारे-णैव तस्य प्रामाण्यात्। ननु च स्मरणप्रत्यभिज्ञानादीनि स्थिरस्थूरवस्तुव्यतिरेकेण नोपपद्यन्ते, पूर्वमदृष्टे तदभावात्, पुरुषाद्यवयविनां स्मरणात्प्रत्यभिज्ञानाच्च। नैत-दस्ति, तेषामलीकवासनाप्रबोधोत्थापितत्वेन प्रामाण्यायोगात्। किं च, तान्यपि स्वयं वर्तमानक्षणे एव प्रकाशन्ते, विप्लववशात्तु स्वरूपमेव वासनासंपादितातीता-र्थरूपतया व्यवस्यन्ति, घनाकारं च तस्यासन्तमध्यारोपयन्ति, तन्न तेभ्योऽपि व्यापिवस्तुसिद्धिः। तस्माद् व्यापिनि रूपे प्रमाणानवतारात् परस्परविश्लिष्टाः पर-माणव एव परमार्थत इति ऋजुसूत्रः॥

सौत्रान्तिकाद्यपेक्षया विरुद्धं भाषणं चतुःक्षणिकं वस्त्वादि विभाषा, गुरोश्च निष्ठाया सेट् इति अप्रत्ययः, स प्रयोजन प्रवर्तकं वैभाषिकध्वनिनिमित्तं यस्य स वैभाषिकः। प्रयोजनम् (पा० ५-१-१०९)- इति ठञ्। प्रभाचन्द्रस्तु न्यायकुमुदचन्द्रे - 'विभाषा सद्धर्मप्रतिपादको ग्रन्थविशेषस्तां विदन्ति अधीयते वा वैभाषिकाः' इत्यु-वाच। तथा मध्ये भवो मध्यमः मध्यान्ममण् वा इति विश्रान्तसूत्रेण मप्रत्ययः। पूर्वोत्तर-क्षणासंस्पर्शी निराकारो ज्ञानक्षणस्तत्समर्थनप्रवणा वादिनोऽपि मध्यमाः। माध्यमिकध्वनिस्तु इत्थम् - मध्यमेन क्षणेन चरन्ति चरत्यर्थे इकण्। यद्वा मध्यम आद्यपुरुषविशेषस्तस्य दर्शनं मध्यमम् तत्प्रयोजनं येषाम्, पूर्ववत् ठञ्, अस्त्यर्थे वा ठञ्। द्वाद्यस्त्रवोनोऽन्य प्राय (?) इति पाठः।

घनाकारोऽपीत्यादिना देशव्याप्तिं दूषयितुमुपक्रमते। स्वप्रतिभासिनः सामा-न्यस्य। तत्प्रतिष्ठापनद्वारेण अध्यवसायवशात्स्वलक्षणव्यवस्थापनद्वारेण। तस्य अनुमानस्य। स्मरणप्रत्यभिज्ञादीति। आदिशब्दात् संकलनाज्ञानादिग्रहः। तान्यपि स्मरणप्रत्य-भिज्ञानादीनि। विप्लव इति। सदृशापरापरोत्पत्तिदर्शनकृतो विभ्रमः। स्वरूपमिति। स्मरणानुगतं बोधरूपम्। वासनेति। पूर्वज्ञानजनितामुत्तरज्ञाने शक्तिमाहुः। तया संपा-दितमतीतार्थरूपमाकारो येषां स्मरणादीनां तेषां भावस्तया, अतीतार्थाकारवन्ति वय स्म इति स्मरणादीनि विकल्पयन्ति। तस्येति। स्वरूपस्य। संग्रहश्लोकः-

तत्रर्जुसूत्रनीतिः स्यात् शुद्धपर्यायसंश्रिता।
नश्वरस्यैव भावस्य भावात् स्थितिवियोगतः॥

तदिदमर्थस्वरूपनिरूपणनिपुणानां नयानां मतमुपवर्णितम् , अधुना शब्दविचारचतुराणामुपवर्ण्यते— तत्र त्रयाणामपि शब्दादीनामिदं साधारणाकूतम् , यदुत शब्द एव परमार्थो नार्थः, तस्य तदव्यतिरिक्तत्वात् । पार्थक्येन वस्तुत्वसिद्धेः कथमव्यतिरेक इति चेत् , प्रमाणादिति ब्रूमः । तथा हि– न व्यतिरिक्तोऽर्थः शब्दात् , तत्प्रतीतौ तस्य प्रतीयमानत्वात् , इह यत्प्रतीतौ यत्प्रतीयते तत् ततोऽव्यतिरिक्तं भवति, तद्यथा शब्दे प्रतीयमाने तस्यैव स्वरूपम् , प्रतीयते च शब्दे प्रतीयमानेऽर्थः, अतोऽसौ ततोऽव्यतिरिक्त इति । अथ अगृहीतसंकेतस्य घटशब्दश्रवणेऽपि घटप्रतीतेरभावाद् व्यतिरिक्त इति चेत् , एवं तर्हि विषस्य मारणात्मकत्वं तदज्ञस्य न प्रतिभातीति तत्ततो व्यतिरिक्तमापद्येत, न चैतदस्ति, तदव्यतिरेकाविशेषेण गुडखण्डवद्विषस्याप्यमारकत्वापत्तेः, संबन्धस्य च व्यतिरिक्तेन सह प्रागेवापास्तत्वात् , तन्न अबुधप्रमातृदोषेण वस्तुनोऽन्यथात्वम् , अन्यथान्धो रूपं नेक्षते इति तदभावोऽपि प्रतिपत्तव्य इति । ये निराभिधाना वर्तन्तेऽर्थास्तेषां शब्दात्पार्थक्येन वस्तुत्वसिद्धिरिति चेन्न, निरभिधानार्थाभावात् , केवलं केचित् विशेषशब्दैः संकीर्त्यन्ते, केचित् सामान्यध्वनिभिरित्येतावान् विशेषः स्यात् । यदि वा सकलार्थवाचका विशेषध्वनयो न सन्तीति नास्त्यत्र प्रमाणम् । ततश्च सर्वेऽर्था विद्यमानस्ववाचकाः, अर्थत्वात् , घटार्थवदिति प्रमाणात् ; सर्वेषां स्ववाचकत्वेन पूर्वोक्तयुक्तेः शब्दादपार्थक्यसिद्धिः । तस्मान्न परमार्थतोऽर्थः शब्दादव्यतिरिक्तोऽस्ति, उपचारतः पुनर्लौकिकैरपर्यालोचितपरमार्थैर्व्यवह्रियते । असावप्यौपचारिकः शब्दात्मको वार्थः प्रतिक्षणभङ्गुरः स्वीकर्तव्यः, वर्णानां क्षणध्वंसिताप्रतीतेः, ऋजुसूत्रप्रतिपादितयुक्तिकलापाच्च ॥

सांप्रतमेतेषामेव प्रत्येकमभिप्रायः कथ्यते— तत्र शब्दो रूढितो यावन्तो ध्वनयः कस्मिंश्चिदर्थे प्रवर्तन्ते, यथा इन्द्रशक्रपुरन्दरादयः, तेषां सर्वेषामप्येकमर्थमभिप्रैति किल प्रतीतिवशात् यथा शब्दाव्यतिरेकोऽर्थस्य प्रतिपाद्यते तथैव तस्यैकत्वं वा नैकत्वं वा प्रतिपादनीयम् , न चेन्द्रशक्रपुरन्दरादयः पर्यायशब्दा विभिन्नार्थवाचितया कदाचन प्रतीयन्ते, तेभ्यः सर्वदैवैकाकारपरामर्शोत्पत्तेः, अस्खलद्वृत्तितया तथैव व्यवहारदर्शनात् । तस्मादेक एव पर्यायशब्दानामर्थ इति शब्दः । शब्द्यते आहूयतेऽनेनाभिप्रायेणार्थ इति निरुक्तादेकार्थप्रतिपादकताभिप्रायेणैव पर्यायध्वनीनां प्रयोगादिति ॥

एक एवेत्यादि । यथा शब्दनयः पर्यायशब्दानामेकमर्थमभिप्रैति तथा तटस्तटी तटमिति विरुद्धलिङ्गलक्षणधर्माभिसंबन्धाद् वस्तुनो भेदं चाभिधत्ते । न हि विरुद्धधर्मकृतं भेदमनुभवतो वस्तुनो विरुद्धधर्मयोगो युक्तः, एवं संख्याकालकारकपुरुषादिभेदादपि भेदोऽवगन्तव्यः । संग्रहश्लोकः—

विरोधे लिङ्गसंख्यादिभेदाद् भिन्नस्वभावताम् ।
तस्यैव मन्यमानोऽयं शब्दः प्रत्यवतिष्ठते ॥

सांप्रतं समभिरूढमतमुपवर्ण्यते— तत्र सम् एकीभावेनाभिरोहति व्युत्पत्तिनिमित्तमास्कन्दति शब्दप्रवृत्तौ योऽभिप्रायः स समभिरूढः। अयं हि पर्यायशब्दानां प्रतिविभक्तमेवार्थमभिमन्यते, तद्यथा – इन्दनादिन्द्रः, परमैश्वर्यमिन्द्रशब्दवाच्यं परमार्थतः, तद्वत्यर्थे पुनरुपचारतो प्रवर्तते, न वा कश्चित् तद्वान्, सर्वशब्दानां परस्परप्रविभक्तार्थप्रतिपादकतया आश्रयाश्रयिभावेन प्रवृत्त्यसिद्धेः। एवं शकनाच्छक्रः, पूर्दारणात् पुरंदर इत्यादि भिन्नार्थत्वं सर्वशब्दानां दर्शयति, प्रमाणयति च— पर्यायशब्दा विभिन्नार्थाः, प्रतिविभक्तव्युत्पत्तिनिमित्तकत्वात्, इह ये ये प्रतिविभक्तव्युत्पत्तिनिमित्तकास्ते ते भिन्नार्थाः, यथा इन्द्रघटपुरुषादिशब्दाः, विभिन्नव्युत्पत्तिनिमित्तकाश्च पर्यायशब्दा अपि, अतो भिन्नार्था इति। यत्पुनरविचारितप्रतीतिबलादेकार्थाभिधायकत्वं प्रतिपाद्यते तदयुक्तम्, अतिप्रसङ्गात्। तथा हि– यदि युक्तिरिक्ता प्रतीतिरेव शरणीक्रियते, तदा तदा मन्दमन्दप्रकाशे दवीयसि देशे संनिविष्टशरीरविभिन्ना अपि निम्बकदम्बाश्वत्थकपित्थादय एकतराकारतामाबिभ्राणाः प्रतीयन्ते इति एकतयैवाभ्युपगन्तव्याः। न चैतदस्ति, विविक्ततत्स्वरूपग्राहिप्रत्ययनीकप्रत्ययोपनिपातबाधितत्वेन पूर्वप्रतीतेः विविक्तानामेव तेषामभ्युपगमात्, तन्नैकार्थवाचिनो ध्वनयः सन्ति, रूढिः पुनरविचारिततदर्थानामिति समभिरूढः॥

सांप्रतमेवंभूताभिप्रायः प्रतिपाद्यते—तत्रैवंशब्दः प्रकारवचनः, ततश्चैवं यथा व्युत्पादितः तं प्रकारं भूतः प्राप्तो यः शब्दः स एवंभूतः, तत्समर्थनप्रधानाभिप्रायोऽप्येवंभूतः, तद्विषयत्वात्, विषयशब्देन च विषयिणोऽभिधानात्। अयं हि यस्मिन्नर्थे शब्दो व्युत्पाद्यते स व्युत्पत्तिनिमित्तमर्थो यदैव विवर्तते तदैव तं शब्दं

---

एकीभावेनेति प्रत्येकम्। अयमभिप्रायः—यथा विरुद्धलिङ्गाद् भिद्यते वस्तु, तथा संज्ञाभेदादपि; ततो यावन्तोऽर्थस्य स्वाभिधायका ध्वनयस्तावन्तोऽर्थभेदाः, प्रत्यर्थं शब्दनिवासादिति। तद्वतीति। परमैश्वर्ययुक्ते उपचारस्य च निमित्तम्, तत्रैश्वर्यस्यावस्थानम्, न वा कश्चिन् तद्वान् शब्दानामभिधेय इति शेषः। दवीयसीति दूरतरे। अविचारिततदर्थानामिति। तेषां शब्दानामर्थस्तदर्थः, न विचारितस्तदर्थो यैस्ते तथा तेषाम्। संग्रहश्लोकः—

तथाविधस्य तस्यापि वस्तुनः क्षणवृत्तिनः।
ब्रूते समभिरूढस्तु संज्ञाभेदेन भिन्नताम्॥

तथाविधस्येति विरुद्धलिङ्गादियोगभेदिनः॥

तद्विषयत्वादिति। स एवंभूतः शब्दो विषयो यस्याभिप्रायस्य तद्भावस्तत्त्वं तस्मात्। विषयिण इति। अभिप्रायस्य। यद्वा यत्क्रियाविशिष्टं शब्देनोच्यते स च क्रियां कुर्वद् वस्तु एवंभूत उच्यते तत्प्रतिपादनपरो नयोऽप्येवंभूतः। तथा एवं यः शब्देनोच्यते चेष्टादिकः प्रकारः तमेवंभूतः प्राप्तोऽभिप्रायः, तद्विशिष्टस्यैव वस्तुनोऽभ्युपगमनात्। अस्मिश्च पक्षे निरुपचारोऽप्येवंभूतध्वनिरभिधीयत इति। यस्त्वचेष्टावत्यपि पृथुबुध्नोदराद्याकारे घट-

प्रवर्तमानमभिप्रैति, न सामान्येन। यथा उदकाद्याहरणवेलायां योषिदादिमस्तकारूढो विशिष्टचेष्टावानेव घटोऽभिधीयते, न शेषः, घटशब्दव्युत्पत्तिनिमित्तशून्यत्वात्, पटादिवदिति। अतीतां भाविनीं वा चेष्टामधिकृत्य सामान्येनैवोच्यते इति चेन्न, तयोर्विनष्टानुत्पन्नतया शशविषाणकल्पत्वात्। तथापि तद्द्वारेण शब्दः प्रवर्तते, सर्वत्र प्रवर्तयितव्यः, विशेषाभावात्। किं च यद्यतीतवत्स्र्यच्चेष्टापेक्षया घटशब्दोऽचेष्टावत्यपि प्रयुज्येत, कपालमृत्पिण्डादावपि तत्प्रवर्तनं दुर्निवारं स्यात्, विशेषाभावात्, तस्माद् यत्र क्षणे व्युत्पत्तिनिमित्तमविकलमस्ति तस्मिन्नेव सोऽर्थस्तच्छब्देन वाच्य इत्येवंभूतः।

तदेवमनेकधर्मपरीतार्थग्राहिका बुद्धिः प्रमाणम्, तद्द्वारायातः पुनरेकधर्मनिष्ठार्थसमर्थनप्रवणः परामर्शः शेषधर्मस्वीकारतिरस्कारपरिहारद्वारेण वर्तमानो नयः। स च धर्माणामानन्त्यादनन्तभेदः, तथापि सर्वसंग्राहकाभिप्रायपरिकल्पनमुखेनैव सप्तभेदो दर्शितः। अयमेव च स्वाभिप्रेतधर्मावधारणात्मकतया शेषधर्मतिरस्कारद्वारेण प्रवर्तमानः परामर्शो दुर्नयसंज्ञामश्नुते। तद्बलप्रभावितसत्ताका हि खल्वेते परप्रवादाः। तथा हि– नैगमनयदर्शनानुसारिणौ नैयायिकवैशेषिकौ। संग्रहाभिप्रायप्रवृत्ताः सर्वेऽप्यद्वैतवादाः, सांख्यदर्शनं च। व्यवहारनयानुपाति प्रायश्चार्वाकदर्शनम्। ऋजुसूत्राकूतप्रवृत्तबुद्धयस्ताथागताः। शब्दादिनयमतावलम्बिनो वैयाकरणादय इति। अथेत्थमभिदधीथाः यथा– कथमेतेऽवधारणद्वारेण स्वकमर्थं समर्थयन्तस्तद्विपरीतं निराकुर्वाणा दुर्नयतां प्रतिपद्यन्ते इति, अत्रोच्यते– एवं प्रवृत्तौ निर्गोचरत्वात्, निर्गोचरस्य नयत्वायोगात्। तथा हि – नयति केनचिदंशेन विशिष्टमर्थं प्रापयति योऽभिप्रायः स नयः, स्वाभिप्रेतधर्मात् शेषधर्मप्रतिक्षेपद्वारेण तु प्रवृत्तौ न किंचन नयति, एकधर्मोल्लिङ्गितस्य वस्तुनोऽसंभवात्, बहिरन्तश्चानेकधर्मपरिकरितस्वभावस्य तस्य प्रतिभासात्, तदपह्नवकारिणां कदभिप्रायाणां प्रतिभासबाधितत्वेनालीकत्वात्। तथा हि– यः तावन्नैगमनयः परस्परविश्लिष्टौ सामान्यविशेषौ प्रत्यपीपदत्, तदयुक्तम्, तयोस्तथा कदाचन प्रतिभासाभावात्। यच्चोक्तम् – अनुवर्तमानैकाकारपरामर्शग्राह्यं सामान्यं यत्र न तत्र विशेष-

शब्दप्रयोगः स मिथ्या, निर्निमित्तत्वात्। **शशविषाणकल्पत्वादिति**। ईषदपरिसमाप्ते शशविषाणे शशविषाणकल्पे, तयोर्भावः तत्त्वं तस्मात्। **सर्वत्रेति** चेष्टादावपीत्यर्थः। **यद्यतीते**त्यादिना शशविषाणकल्पत्वाभावेऽपि दूषणान्तरमभिदधाति। संग्रहश्लोकः—

एकस्यापि ध्वनेर्वाच्यं सदा तन्नोपपद्यते।
क्रियाभेदेन भिन्नत्वादेवंभूतोऽभिमन्यते॥

सदेति। प्रवृत्तिनिमित्तकालादन्यदापि। तदिति वस्तु॥

**वैयाकरणादय इति**। आदिशब्दादभिधानकोशकर्तारो गृह्यन्ते।

प्रतिभासः, यत्र च विशिष्टदेशदशावच्छिन्नबोधनिर्ग्राह्यो विशेषो न तत्र सामान्यावगतिः, तद्वचनमात्रमेव, धवखदिरपलाशादिसमस्तविशेषापसरणे वृक्षत्वादिसामान्यप्रतिभासाभावात् । दूराद्विशेषाग्रहणेऽपि केवलं तच्चकास्तीति चेत्, तत्राप्यभ्यन्तरीभूतविशेषप्रतिभासात्, तद्विरहे शशविषाणरूपत्वात् । एवं विशेषा अपि न सामान्यादत्यन्तव्यतिरेकिणः प्रतिभान्ति, तन्निमग्नानामेव तेषां ग्रहणात्, इतरथा सत्तातोऽतिरिच्यमाना भावा निःस्वभावतामात्मसात्कुर्वन्ति । तथा वृक्षत्वादिसामान्येभ्योऽपि भेदिनो वृक्षादयो न स्युः, तदभेदनिबन्धनत्वात् तत्स्वरूपस्थितेः, तस्मात्तदेव संवेदनमुपसर्जनीकृतवैषम्यं प्रधानीकृतैकाकारं सामान्यं गृह्णाति इत्युच्यते, न्यक्कृतसमत्वमुत्कलितनानात्वं पुनर्विशेषग्राहीति, समत्वनानात्वयोः कथंचिद् भेदाभेदिनोः परस्परं सर्वार्थेषु भावात्, तदभावे तथाविधप्रतिभासानुपपत्तेः । एतेन यदवादि 'न चैतौ विभिन्नावपि प्रतिभासमानौ सामान्यविशेषौ कथंचिद् मिश्रयितुं युक्तावित्यादि' तदपास्तमवगन्तव्यम्, विभिन्नयोः प्रतिभासाभावात्, व्यवहारोऽपि सर्वप्रधानोपसर्जनद्वारेण कथंचिदितरेतराविनिर्लुठितसामान्यविशेषसाध्य एव । न हि सामान्यं दोहवाहादिक्रियायामुपयुज्यते, विशेषाणामेव तत्रोपयोगात्; नापि विशेषा एव तत्कारिणः, गोत्वशून्यानां तेषां वृक्षाद्यविशिष्टतया तत्करणसामर्थ्याभावात् । किं च अत्यन्तव्यतिरेके सामान्यविशेषयोः 'वृक्षं छिन्द्धि' इति चोदितः किमिति तद्विशेषे पलाशादौ छेदं विधत्ते ? तत्र तस्य समवायादिति चेन्न । समवायग्राहकप्रमाणाभावात्, भावेऽपि विश्लिष्टयोरभेदबुद्ध्युत्पादनाक्षमत्वात्, तस्यापि व्यतिरिक्ततया पदार्थान्तराविशेषात् नित्यत्वैकत्वसर्वगतत्वादिभिश्च सर्वत्र तत्करणप्रसङ्गात् । यत्पुनरवादीः 'यदुत यदि सामान्यं विशेषनिष्ठम्, विशेषो वा सामान्यव्यासः समुपलभ्येत, ततो विविक्तयोस्तयोः क्वचिदनुपलम्भात् योऽयं विविक्तः सामान्यविशेषेषु चाभिधानार्थक्रियालक्षणो व्यवहारः स समस्तः प्रलयं यायाद्, लोलीभावेन तद्विवेकस्य कर्तुमशक्यत्वात्', तदप्यसमीचीनम् । यतो यद्यपि परस्पराविविक्तयोः सामान्यविशेषयोः सर्वत्रोपलम्भः, तथापि यत्रैव प्रमातुरर्थित्वं तदेव सामान्यम्, विशेषान्वा प्रधानीकृत्य तद्गोचरं ध्वनिमर्थक्रियां वा प्रवर्तयति, इतरस्याप्युपसर्जनभावेन तत्र व्यापारात्, तद्विकलस्येतरस्यापि शशविषाणायमानतया क्वचिदनुपयोगात् । किं च, अत्यन्तव्यतिरेकिणि विशेषेभ्यः सामान्ये वृत्तिविकल्पो-

---

तद्विरहे विशेषाणामभावे । शशविषाणरूपत्वादिति । यदुक्तम् —

निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।
विशेषोऽपि च नैवास्ति सामान्येन विनाकृतः ॥ इति ।

**उपसर्जनीत्यादि** । उपसर्जनीकृत गौणीकृतं वैषम्यं विशेषरूपता येन तत्तथा **न्यक्कृतसमत्वमिति** । तिरस्कृतसामान्यम् ।

पक्षेऽभिनूतनविशेषसंबन्धादिद्वारेण दूषणमुद्गरकदम्बकं मूर्धनि पतद् दुर्विषहं स्यात्। तथा हि – तत्तेषु कथं वर्तेत सामस्त्येन एकदेशेन वा? सामस्त्यपक्षे प्रतिविशेषं परिसमाप्ततया सामान्यबहुत्वप्रसङ्गः, अनिष्टं चैतद्, एकत्वाभ्युपगमक्षतेः। एकदेशेन पुनर्यावन्तो विशेषास्तावन्तस्तदंशाः प्रसजन्ति, न चैतदस्ति, सामान्यस्य निरवयवत्वात्, सावयवत्वेऽपि पुनस्ते भिन्ना अभिन्ना वा। यद्यभिन्ना विशेषाः, तद्भेदिनः किं नेष्यन्ते, विशेषाभावात्। भेदपक्षे पुनस्तेष्वपि तत्कथं वर्तेत – सामस्त्येन एकदेशेन वेति? तदेव चोद्यमलब्धपरिनिष्ठमवतरति, तन्नात्यन्तभेदिनो वृत्तिः संभवति। किं च यद्येकं सामान्यं भेदवत् समस्तविशेषेषु वर्तेत, तदैकविशेषोपलम्भकाले तदुपलभ्यते न वा? यद्याद्यः पक्षः, तस्यैकतया सर्वत्रोपलम्भात्, व्याप्यग्रहणाभावे व्यापकग्रहणासिद्धेः निखिलतद्व्याप्यविशेषग्रहणमासज्येत, न चैतदस्ति, पुरोवर्तिविशेषस्यैव साक्षात्करणात्, शेषविशेषाणामसंनिधानात्, संनिहितविशेषनिष्ठमेव तदुपलभ्यते, तस्यैव तद्व्यञ्जकत्वात्। इतरेषां तदभावादिति चेन्न, एकस्वभावस्य खण्डशो व्यञ्जनायोगात्, संनिहितविशेषव्यञ्जितमेव तत्सर्वत्र स्वभावान्तराभावात् सर्वविशेषगतं च तद्रूपमतस्तद्दर्शनं केन वार्येत। अथ द्वितीयः कल्पः, तथा सति यथा एकविशेषोपलम्भसमये नोपलभ्यते, तथा विशेषोपलम्भकालेऽपि नोपलभ्येत, विशेषाभावात्, अतस्तदभाव एवोक्तः स्यात्, केवलस्योपलम्भाभावात्, उपलम्भेऽपि स्वस्वभावस्थितेर्विशेषरूपतापत्तिः, तथा चिरंतनविशेषव्यवस्थितसत्ताकं तन्नूतनविशेषोत्पादे सति कथं तेन सह संबन्धमनुभवेत्? न तावद्विशेषान्तरेभ्यस्तदुत्पित्सु विशेषदेशं गन्तुमर्हति, निष्क्रियत्वात्, नापि तत्रैवाभवत्, विशेषोत्पादात्प्राक् तद्देशे तदुपलम्भाभावात्, नापि विशेषेण सहोत्पद्यते, नित्यत्वात्, नित्यस्य चोत्पत्तिनिरोधाभावात्। अथ एतद्दोषपरिजिहीर्षया तत्सक्रियकमभिधीयते, तथापि पूर्वव्यक्तित्यागेन वा नूतनविशेषदेशमाक्रामेत् तदभावेन वा? न तावदाद्यः पक्षः, चिरंतनव्यक्तीनां सामान्यविकलतया तत्संबन्धसाध्यबुद्धिध्वनिविरहप्रसङ्गात्, न चैतदस्ति, अपरापरविशेषोत्पादेऽपि प्राचीनव्यक्तिषु तद्दर्शनात्। अथ द्वितीयः कल्पः, तदप्यसंबद्धम्, निरवयवस्य पूर्वव्यक्तित्यागवैकल्येन समुत्पित्सुव्यक्तिप्रतिगमनाभावात्, सावयवपक्षस्य पुनः प्रागेवापास्तत्वात्, नैतदभ्युपगमद्वारेण परिहारः श्रेयान्। अन्यच्च व्यतिरिक्तसामान्यसंबन्धाद् यदि भावाः समानाः, न स्वरूपेण, तदा सत्त्वसंबन्धात्प्राग् भावाः सन्तोऽसन्तो वा। सन्तश्चेदपार्थकः सत्तासंबन्धः, अन्यथानवस्था प्रसज्येत,

---

तद्दर्शनमिति। सर्वव्यक्तीनां प्रत्यक्षता।

नूतनविशेषसंबन्धादीत्यादिशब्दसूचितं दूषणमभिधातुकाम आह **अन्यच्चेत्यादि**। **सत्त्वसंबन्धादिति**। सत्त्वं सामान्यं भावः सत्ता जातिरिति पर्यायाः।

पुनः सत्तान्तरसंबन्धानिवारणात्। असन्तश्चेदत्यन्तासतामपि गगनारविन्दादीनां सत्तासंबन्धात् भावरूपतापद्येत। एवं द्रव्यत्वगुणत्वकर्मत्वगोत्वादिसामान्येष्वपि समस्तमेतद्वाच्यम्, एकयोगक्षेमत्वात्, तन्न परस्परमत्यन्तव्यतिरेकिणौ सामान्यविशेषौ कथंचन घटामाटीकेते। अत एव तत्समर्थनप्रवणस्तत्तादात्म्यप्रतिक्षेपकोऽभिप्रायो निरालम्बनत्वान्नैगमदुर्नयस्य व्यपदेशमास्कन्दति, तादात्म्यापेक्षयैव सामान्यविशेषव्यतिरेकसमर्थकस्य नैगमनयत्वात्, व्यतिरेकिणोरपि तयोर्वस्तुनि कथंचिद् भावात्, इतरथा विवक्षयापि तथा दर्शयितुमशक्यत्वात्, प्रधानोपसर्जनभावस्य द्वयनिष्ठत्वात्, अत्यन्ततादात्म्येन तत्कारिण्या विवक्षाया अपि निर्गोचरताप्रसङ्गात्। तस्मात्कथंचिद् भेदाभेदिनावेवैतौ, तदन्यतरसमर्थकः पुनः निरालम्बनत्वात् दुर्नयतां स्वीकरोतीति स्थितम्॥

तथा संग्रहोऽप्यशेषविशेषप्रतिक्षेपमुखेन सामान्यमेकं समर्थयमानो दुर्नयः, तदुपेक्षाद्वारेणैव तस्य नयत्वात्, विशेषविकलस्य सामान्यस्यासंभवात्। तथा हि— यत्तावदुक्तम्– यदुत विशेषाः सामान्याद् व्यतिरेकिणोऽव्यतिरेकिणो वा। व्यतिरेकपक्षे निःस्वभावत्वम्, निःसत्ताकत्वात्। अव्यतिरेकपक्षे भावमात्रम्, तदव्यतिरिक्तत्वात्, तत्स्वरूपवत्। तदयुक्तम्, विशेषवादिनोऽप्येवंविधविकल्पसंभवात्। तथा हि– विशेषेभ्यः सामान्यं व्यतिरिक्तमव्यतिरिक्तं वा। व्यतिरिक्तं चेन्न तर्हि सामान्यम्, स्वस्वरूपव्यवस्थिततया विशेषरूपत्वात्। अव्यतिरिक्तं चेत्, तथापि न सामान्यम्, विशेषाव्यतिरिक्तत्वादेव तत्स्वरूपवत्। यदप्यवादि – अनाद्यविद्याबलप्रवृत्तो विशेषव्यवहारः, तात्त्विकं सामान्यम्, तदपि च वचनमात्रमेव, युक्तिरिक्तत्वात्, सामान्यमेवानाद्यविद्यादर्शितम्, विशेषाः पुनः पारमार्थिका इति विशेषवादिनोऽपि वदतो वक्त्रभङ्गाभावात्। यत्पुनर्विशेषग्राहकप्रमाणाभावं प्रतिपादयता अभ्यधायि – यदुत प्रत्यक्षं भावसंपादितसत्ताकं तमेव साक्षात्करोति नाभावं तस्यानुत्पादकत्वादित्यादि, तदयुक्ततरम्, यतः केनेदं भवतोऽत्यन्तसुहृदा निवेदितं भाव एव केवलः प्रत्यक्षमुपस्थापयति, न पुनरभावोऽपि। अभावव्यापाराभावप्रतिपादकयुक्तिकलापेनेति चेत् मुग्ध विप्रतारितोऽसि, तद्व्यापाराभावासिद्धेः, सदसद्रूपवस्तुनः समस्तक्रियासु व्यापारात्। भावतादात्म्येन व्यवस्थितस्याभावस्य व्यापारविरोधाभावात् कथं भावाभावयोस्तादात्म्यम्? विरोधादिति चेत्, न, प्रमाणप्रसिद्धे विरोधाभावात्। तथा हि – घटादिकः पदार्थात्मा स्वरूपेण सन्, न पटादिरूपेणापि

---

इतरथेति। यदि कथंचिद् व्यतिरेकिणावपि सामान्यविशेषौ न स्याताम्। तथेति। व्यतिरेकेण। तत्कारिण्या भेदविधायिन्या।

युक्तिकलापेनेति। भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि। इत्यादिना व्याप्रियते इति भावाभावात्मकं वस्त्विति शेषः। तद्रूपमिति। भावाभावात्मकवस्तुरूपम्। तदिति।

इति भावाभावात्मकः, यदि पुनः कथंचिन्नाभावात्मकः स्यात्, तदा पटादिरूपेणापि भावात् सर्वात्मकः प्राप्नोति, युक्तमेतत्, अत एव भेदप्रपञ्चविलयसिद्धिरिति चेत्, स्यादेतत्, यदि पटाद्यभावैकान्ताच्छून्यवादिनो मनोरथपूरणं न स्यात्। तथा हि— पटादिविविक्तो घटोऽनुभूयते, न च पटाद्यभावो भावेन सह तादात्म्यमनुभवति, तस्मादभावात्मक एवायम्, एवं पटादयोऽपीतरेतरापेक्षयेति शून्यत्वापत्तिः, तस्मात् स्वरूपमाबिभ्राणं पररूपेभ्यो व्यावृत्तमेव वस्तु सर्वक्रियासु व्याप्रियते इति भावाभावात्मकस्यैव व्यापारः स्वरूपधारणस्य स्वभावत्वात्, पररूपव्यावर्तनस्याभावत्वादिति। एवं स्वगोचरप्रत्यक्षोत्पादनेऽपि व्याप्रियते, ततश्च तद्रूपमेव तत्साक्षात्कुर्यादिति स्वरूपनियते पररूपेभ्यो व्यावृत्ते एव वस्तुनि प्रत्यक्षं प्रवर्तते, तज्जन्यत्वात्, न भावमात्रे, तस्य केवलस्य स्वरूपाऽव्यवस्थितेरुत्पादकत्वायोगात्। न च जनकत्वादर्थो ग्राह्यो जन्यत्वाद्वा ज्ञानं ग्राहकमतिप्रसङ्गादित्युक्तम्, किं तर्हि आवरणविच्छेदादेर्लब्धसत्ताकं ग्रहणपरिणामात् ज्ञानं गृह्णाति, अर्थस्तु संनिधानादेर्गृह्यते, स चानुवर्तमानव्यावर्तमानरूप एव प्रतीयते इति तथाभूतोऽभ्युपगन्तव्यः, न केवलं सामान्यरूप इति। सदसदंशयोः कथमेकत्रावस्थानमिति चेत्, तादात्म्येनेति ब्रूमः। ननु तादात्म्यं भावमात्रमभावमात्रं वापद्येत, इतरेतराव्यतिरिक्तत्वात्, इतरेतरस्वरूपवत्, तन्नोभयरूपवस्तुसिद्धिः। नैतदस्ति, तादात्म्यस्य संबन्धत्वात्, संबन्धस्य च द्वयनिष्ठत्वात्, तदभावे कस्य केन संबन्धः निर्गोचरत्वात्। तस्मादेतौ सदसदंशौ धर्मिरूपतया अभेदिनौ, वस्तुनः सदसद्रूपस्यैकत्वाद्, धर्मरूपतया पुनर्विवक्षितौ भेदमनुभवतः, स्वरूपेण भावात्, पररूपेण त्वभावादिति। तदेवं प्रत्यक्षे विविक्तवस्तुग्राहिणि सकलप्रमाणप्रष्ठे प्रसाधिते शेषप्रमाणान्यपि तदनुसारितया विविक्तमेव स्वगोचरं स्थापयन्तीति, तदपलापी केवलसामान्यप्रतिष्ठापकः कदभिप्रायः संग्रहदुर्नयव्यपदेशं स्वीकुरुते, विशेषापेक्षयैव सामान्यस्थापकस्य संग्रहनयत्वादिति॥

तथा व्यवहारोऽपि प्रमाणप्रसिद्धं वस्तुस्वरूपं निह्नुवानो युक्तिरिक्तमविचारितरमणीयं लोकव्यवहारमार्गानुसारि समर्थयमानो दुर्नयतामात्मनि निधत्ते, लोकव्यवहारप्रसाधकस्यापीतरानिष्टौ व्यवस्थानाभावात्। तथा हि— यदीदं कियत्कालभावि स्थूरतामाबिभ्राणां लोकव्यवहारकारि घटादिकं भवतस्तात्त्विकमभिप्रेतं तन्नाकस्मिकम्, किं तर्हि नित्यपरमाणुघटितम्, इतरथा निष्कारणत्वेन सर्वदा भावाभावप्रसङ्गात्। न ते परमाणवस्तथा प्रतिभान्तीति चेत्, न, अत एव तेषामनुमानतः

---

प्रत्यक्षम्। **अतिप्रसङ्गादिति**। चक्षुषा जन्यमानस्यापि ज्ञानस्य चक्षुरग्राहकत्वात्। **आवरणविच्छेदादेरिति**। विच्छेदः क्षयः, आदिशब्दात् क्षयोपशमः तद्धेतवश्च कारणत्वेन द्रव्यक्षेत्रकालालोकादयः गृह्यन्ते, तर्हि ज्ञानावरणकर्मणः क्षयोपशमे कृते तदनन्तरमव्यवधानेन ज्ञानमुत्पद्यते इति। **प्रष्ठे इति**। विशदप्रतिभासरूपत्वेन सकलप्रमाणमुख्ये।

सिद्धिः, यदि पुनर्यदेव साक्षान्न विशददर्शने चकास्ति तत्सकलमपलप्येत हन्त तद्धिदानीमपलपनीयम्, घटादिवस्तुनोऽप्यर्वाग्भागवर्तित्वङ्मात्रप्रतिभासात् मध्यपरभागादीनामपलापप्रसङ्गात्, तथा च लोकव्यवहारकारितापि विशीर्येत, तावता तदसिद्धेः। अथात्रानुमानबलेन व्यवहारक्षमसंपूर्णवस्तुनः साधनम्, एवं तर्हि भूतभाविपर्यायपरमाणुसाधनमपि क्रियताम्, विशेषाभावात्। तथा हि– यथा बाह्यत्वङ्मात्रप्रतिभासेऽपि सर्ववस्तूनां तावता व्यवहाराभावाद् मध्यभागादिसाधनेन संपूर्णानि तत्समर्थानि तानि साध्यन्ते, तथैव कियत्कालभाविघनाकारदर्शनेऽप्यनाद्यनन्तपरमाणुतादात्म्यव्यवस्थितशरीराणि तानि साध्यन्ताम्, तदभावेऽपि तेषामनुपपत्तेः। तथा हि– व्यवहारावतारिणो दर्शनयोग्यस्याद्यपर्यायस्य तावदतीतपर्यायानभ्युपगमे निर्हेतुकत्वम्, तत्र चोक्तो दोषः, तदुत्पादकादन्तरपर्यायेष्टौ पुनस्तज्जनकपर्यायोऽभ्युपगन्तव्य इति अनादिपर्यायपरंपरासिद्धिमध्यासीत, तथा व्यवहारावतारिवस्तुपर्यन्तपर्यायस्य पर्यायान्तरानुत्पादकत्वे बलादवस्तुत्वमाढौकते, भवन्नीतेरेवार्थक्रियाकरणवैकल्यात्, तदुत्पादकत्वे पुनरसावप्यपरपर्यायोत्पादकत्वे इत्यनन्तपर्यायमालोपपद्यते। तथा घनाकारोऽपि विशददर्शनेन साक्षात्क्रियमाणो निष्प्रदेशपर्यन्तावयवव्यतिरेकेण नोपपद्यते, करचरणशिरोग्रीवाद्यवयवानां खण्डशो भिद्यमानतयावयविरूपत्वात्, तदवयवानामप्यवयवान्तरघटितत्वात्। परमाणव एव पर्यन्तावयवाः परमार्थतो घनाकारहेतवः, तदभावे पुनराकस्मिकोऽसौ सर्वत्रोपलभ्येत, न वा क्वचित्, विशेषाभावात्। एतेन यदवादि– लोकव्यवहारावतारिणः प्रमाणमनुग्राहकमस्ति वस्तुनो नेतरस्येत्यादि तदपि प्रतिक्षिप्तमवगन्तव्यम्, दृश्यमानार्थान्यथानुपपत्त्यैव तत्साधनात्। यत् पुनरुक्तम्– किं तेषामतीतानागतपर्यायपरमाण्वादीनां पर्यालोचनेन लोकव्यवहारानुपयोगितया वस्तुत्वादित्यादि, तदयुक्तम्, उपे-

---

अनुमानतः सिद्धिरिति। द्व्यणुकादिस्कन्धो भेद्यः, मूर्तत्वे सति सावयवत्वात्, कुम्भवत्। सावयवैराकाशादिभिर्व्यभिचारपरिहारार्थं मूर्तत्वे सतीति विशेषणम्। ये च द्व्यणुकादिभेदादनन्तरमंशा समुत्पद्यन्ते अवयवास्ते परमाणवः। अथवान्यथानुमानयामः– अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तम्, परिमाणतारतम्यत्वात्, आकाशपरिमाणतारतम्यवत्। यत्र अणुपरिमाणतारतम्यं विश्रान्तं त एव परमाणवः। **अथानुमानबलेनेति।** तथा हि– अर्वाग्भागः सांशः, अर्वाग्भागत्वात्, संप्रतिपन्नार्वाग्भागवत्। न च वाच्यं यद्यर्वाग्भागदर्शनेनावयवी साध्यन्ते, तर्हि घटशकलमात्रस्यापि सांशत्वसिद्धिः प्राप्नोति, यतो घटशकलं भागमात्रं न त्वर्वाग्भाग इति कथं तेन व्यभिचारः?। **तानीति।** वस्तूनि **आद्यपर्यायस्येति।** वार्तमानिकस्य, तत्र चोक्तो दोष इति।

नित्यं सत्त्वमसत्त्वं वाहेतोरन्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसंभवः॥ इति।

क्षया वार्तमानिकवस्तुनोऽनुपयोगित्वेनावस्तुत्वप्राप्तेः, सर्वस्य सर्वलोकानुपयोगित्वात्। कस्यचिदुपयोगितया वस्तुत्वे तेषामपि सा समस्त्येव, सर्वज्ञज्ञानादिगोचरत्वाद् इत्यास्तां तावत्। तदेवं प्रमाणप्रसिद्धार्थापलापित्वाद् व्यवहारो दुर्नयः, तदुपेक्षया व्यवहारानुपातिवस्तुसमर्थकस्य व्यवहारनयत्वादिति।

अथ ऋजुसूत्रोऽपि दृष्टापलापेनादृष्टमेव क्षणक्षयिपरमाणुलक्षणं वस्तुस्वरूपं परमार्थतया मन्यमानो दुर्नयतामास्कन्दति, दृश्यमानस्थिरस्थूरार्थापह्नवे निर्मूलतया स्वाभिप्रेतवस्तुसमर्थकपरामर्शस्योत्थानाभावात्। तथा हि– स्वावयवव्यापिनं कालान्तरसंचरिष्णुमाकारं साक्षाल्लक्षयन् पश्चात् कुयुक्तिविकल्पेन विवेचयेत्, यदुतैष स्थिरस्थूरो दृश्यमानः खल्वाकारो न घटामियर्ति, विचाराक्षमत्वादित्यादिना च दृष्टमदृष्टसंदर्शकैः कुयुक्तिविकल्पैर्बाधितुं शक्यम्, सर्वत्रानाश्वासप्रसङ्गात्। अथाभिदधीथाः– मन्दमन्दप्रकाशे प्रदेशे रज्जौ विषधरभ्रान्तिः प्राक्तनी यथोदीचीनेन तन्निर्णयकारिणा विकल्पेन बाध्यते, तथेदमपि स्थिरस्थूरदर्शनं क्षणक्षयिपरमाणुप्रसाधकपरामर्शेन, किमत्रायुक्तम्, नैतदस्ति, रज्जुप्रतिभासस्यैव प्राक्प्रवृत्तविषधरभ्रान्त्यपनोददक्षत्वात्, तदभावे च विकल्पशतैरपि निवर्तयितुमशक्यत्वात्, अत्राप्यतीतवर्त्स्यतोर्विनष्टानुत्पन्नतया संनिहितत्वात्, स्थूरावयवानां च स्वावयवेषु भेदाभेदद्वारेण पर्यालोच्यमानानामवस्थानाभावात् क्षणक्षयिपरमाणव एव प्रतिभान्ति, ततश्च प्रतिभास एव स्थिरस्थूरदर्शनस्य बाधक इति चेत्, एवं तर्हि प्रतिभासस्योपदेशगम्यतानुपपत्तेः तथैव व्यवहारः प्रवर्तेत। पाश्चात्यमिथ्याविकल्पविप्लवात्त प्रवर्तते इति चेत्, न, अन्यत्राप्यस्योत्तरस्य विप्लवहेतुत्वात्। तथा हि– धवले जलजादौ प्रतिभातेऽपि 'नीलोऽयम्' अध्यक्षेणावलोकितः पाश्चात्यमिथ्याविकल्पविप्लवाद् धवलः प्रतिभातीति भवन्न्यायेन शठः प्रतिजानानः केन वार्येत। तन्न दृष्टापलापः कर्तुं शक्य इति स्थिरस्थूरवस्तुसिद्धिः, तस्यैव दर्शनात्, इतरस्य तद्दर्शनद्वारेण साध्यमानस्यानुमेयत्वात्, तदनिष्टौ तस्याप्यसिद्धेः। एतेन स्थिरस्थूरवस्तुनोऽर्थक्रियाविरहप्रतिपादनमपि प्रतिव्यूढम्, तथाविधस्यैव सर्वक्रियासु व्यापारदर्शनात् क्षणक्षयिणोऽर्थक्रियानिषेधाच्च। यथोक्तं प्राक्–क्षणभङ्गुरो ह्यर्थात्मा स्वक्षणे पूर्वं पश्चाद्वा कार्यं कुर्यादित्यादि। किं च सत्त्वपुरुषत्वचैतन्यादिभिर्बालकुमारयुवस्थविरत्वहर्षविषादादिभिश्चानुवर्तमानव्यावर्तमानरूपस्य सर्वस्य वस्तुनः प्रतीतेर्द्रव्यपर्यायात्मकत्वम्, अभेदस्य द्रव्यत्वात्, भेदस्य पर्यायरूपत्वादिति। ततश्च भूतभाविक्षणयोरसंनिधानद्वारेण वार्तमानिकक्षणस्यैवार्थक्रियाकारित्वप्रतिपादनं नास्मद्बाधाकरम्, पर्यायाणां क्रमभावितया वर्तमानपर्यायालिङ्गितस्यैव द्रव्यस्यार्थक्रियाकरणचतुरत्वात्, केवलं तत्त्रिकालव्यापि दृष्टापि द्रव्यरूपतया यथाभूत एव, ततश्च क्षणिकपर्यायतिरोधान-

---

इतरस्य क्षणक्षयिपरमाणुतत्त्वस्य। तद्दर्शनेति। स्थिरस्थूरवस्तुदर्शनद्वारेण।

द्वारेण तद्रूपसंकलनात् स्थिरमेवेदं समस्तक्रियासु व्याप्रियते इति प्रतीतिवीथीमवतरति, स्थैर्यस्यापि तात्त्विकत्वात्, क्षणिकपर्यायाणां विद्यमानानामप्यग्रहणात्, प्राकृतलोकज्ञानस्यावरणक्षयोपशमापेक्षितया कतिचिदंशविषयत्वात्। यदि पुनर्द्रव्यबुद्धिः पर्यायपरंपरादर्शनबलायातत्वादतात्त्विकी कल्प्येत, तदा पूर्वपर्यायस्योत्तरपर्यायोत्पादने सान्वयत्वं निरन्वयत्वं वा वक्तव्यम्, गत्यन्तराभावात्। सान्वयत्वे द्रव्यं पर्यायान्तरेणाभिहितं स्यात्, निरन्वयत्वाच्च पुनर्निर्हेतुतयोत्तरपर्यायानुत्पादप्रसङ्गः। तन्नोभयरूपवस्तुव्यतिरेकेणार्थक्रियासिद्धिः। न चार्थक्रिया वस्तुलक्षणम्, शब्दविद्युत्प्रदीपादिचरमक्षणानां क्षणान्तरानारम्भकत्वेनावस्तुत्वप्राप्तेः, तदवस्तुत्वे पुनरुपान्त्यक्षणस्यापि वस्तुनि व्यापाराभावात्, एवं यावत्सर्वक्षणानां संकलिकया वस्तुत्वम्। अथ क्षणान्तरानारम्भेऽपि स्वगोचरज्ञानजनकत्वमर्थक्रिया परिकल्प्येत, तथा सति अतीतभावपर्यायपरंपरापि योगिज्ञानगोचरतां यातीति वस्तुत्वं स्वीकुर्यात्, तन्नार्थक्रिया वस्तुलक्षणम्, अपि तु उत्पादव्ययध्रौव्ययुक्तता, प्रमाणप्रतिष्ठितत्वात्। उत्पादव्ययौ ध्रौव्येण सह विरुद्धाविति चेत्, कुतोऽयं विरोधः, प्रमाणादप्रमाणाद् वा। न तावदाद्यः पक्षः, सर्वप्रमाणानां बहिरन्तस्तथाविधवस्तुद्योतनपटिष्ठतया प्रसाधितत्वात्। नापि द्वितीयः, अप्रमाणस्याकिंचित्करत्वात्। एतेन स्थूरतादूषणमपि प्रतिक्षिप्तम्, प्रतिभासहतत्वात्, तदपह्नवे विरोधोद्भावे तस्य निर्मूलतया प्रलापमात्रत्वात्। यत्पुनर्वर्तमानप्रकाशरूपतया तत्संबन्धवस्तुग्राहित्वं सर्वप्रमाणानामुदग्राहि तदयुक्तम्, तेषामेकान्तेन वार्तमानिकत्वासिद्धेः, कथंचिदात्माव्यतिरेकित्वात्, तस्य च कालत्रयव्यापकत्वात्, तद्रूपतया तेषामप्यवस्थानात्, ततश्चात्मनोऽर्थग्रहणपरिणामरूपत्वात्। सर्वप्रमाणानां परिणामिन्येव वस्तुनि व्यापारो न क्षणिके। न चातीतानागतक्षणवर्तिवस्तुग्रहणेऽप्यनाद्यनन्तजन्मपरंपराग्रहणप्रसङ्गः, आवरणविच्छेदसापेक्षत्वात्, तस्यैव परमार्थतः संवेदनाविर्भावान्तरकारणत्वात्, ग्राह्यादेर्बहिरङ्गत्वात्। सामस्त्येन पुनरावरणविलये सति समस्तवस्तुविस्तारानाद्यनन्तक्षणपरंपराग्रहणप्रसङ्गो न(तो)नाबाधाकारी, इष्टत्वात्। तदेकदेशक्षयोपशमे पुनस्तदनुसारिणी बोधप्रवृत्तिरिति कियत्कालं भाविनि स्थूरे वस्तुनि प्राकृतलोकज्ञानानि प्रवर्तन्ते न संपूर्णे। न च तान्यलीकानि, तद्ग्राह्यांशस्यापि वस्तुनि भावात् तावतैव व्यवहारसिद्धेरिति। यच्चोक्तम्- क्षणिकतां गृह्णन्तोऽपि सदृशापरापरोत्पत्तिविप्रलब्धत्वाद् मन्दा नाध्यवस्यन्ति, मिथ्याविकल्प-

---

वीथीं मार्गम्। पर्यायान्तरेण नामान्तरेण। न चार्थक्रिया वस्तुलक्षणमिति। यदाह रागान्धावस्थायामपि धर्मकीर्तिः—

गच्छतु क्वापि ते स्वान्तः कान्ते कार्यं त्वयैव च।
यदेवार्थक्रियाकारि तदेव परमार्थसत्॥ इति।

उपान्त्येति। अन्तस्य समीपमुपान्तं तत्र भवमुपान्त्यम् दिगादिदेहांशाद् यः (सि० है० ६-३-१२४) इति यः।

बलात् स्थिरताव्यवहारं च प्रवर्तयन्ति, तदयुक्तम्, भवदाकूतेन सादृश्याभावात्, तदभावे तदुत्पाद्याभिमतभ्रान्तेर्निर्बीजतयोत्पत्तेरसंभवात्। तथा स्थिरतारोपोऽपि क्वचिद् गृहीतस्थिरत्वस्यैव युक्तो नान्यथा, यथा दृष्टविषधरस्य मन्दप्रकाशे रज्जुदर्शने विषधरारोपः, न च भवतां कदाचन स्थिरता प्रतीतिगोचरचारितामनुभवति, तत्कथं प्रतिक्षणमुदयापवर्गसंसर्गिणि सकले वस्तुनि प्रत्यक्षेणावलोकितेऽपि तदारोप इति तस्मात्तिरोहितक्षणविवर्तमलक्षितपरमाणुवैविक्त्यं वस्तु सांव्यवहारिकप्रमाणैर्गोचरीक्रियते। तत्तिरस्कारद्वारेण अदृष्टक्षणक्षयिपरमाणुप्रतिष्ठापकोऽभिप्राय ऋजुसूत्रो दुर्नयसंज्ञामश्नुते, तदुपेक्षयैव तद्दर्शकस्य नयत्वात्। इति॥

तथा शब्दादयोऽपि सर्वथा शब्दाव्यतिरेकमर्थस्य समर्थयन्तो दुर्नयाः, तत्समर्थनार्थमुपन्यस्तस्य तत्प्रतीतौ प्रतीयमानत्वलक्षणस्य हेतोरनैकान्तिकत्वात्। तथा हि— नायमेकान्तो यत्प्रतीतौ यत्प्रतीयते तत्ततोऽव्यतिरिक्तमेव, व्यतिरिक्तस्यापि पावकादेरन्यथानुपपन्नत्वलक्षणसंबन्धबलाद् धूमादिप्रतीतौ प्रतीयमानत्वात्। एवं शब्दोऽपि व्यतिरिक्तमप्यर्थं वाचकत्वात् प्रत्याययिष्यति, अव्यतिरेकस्य प्रत्यक्षादिबाधितत्वात्, शब्दाद्विवेकेनैवानुभूयमानत्वात्, अस्मिंश्च हेतावनैकान्तिके स्थिते सर्वार्थानां स्ववाचकत्वसाधनद्वारेण शब्दाव्यतिरेकसाधनमपि दूरापास्तमेव। न चात्रापि प्रतिबन्धग्राहि प्रमाणम्— यो योऽर्थस्तेन तेन सवाचकेन भवितव्यम्, घटादिदृष्टान्तमात्रात्तदसिद्धेः, क्षणिकालक्ष्यद्रव्यविवर्तानां संकेतग्रहणोपायाभावेनाभिलपितुमशक्यतया अनभिलाप्यत्वसिद्धेश्च क्षणभङ्गुरताप्रतिज्ञानं पुनरमीषामपि ऋजुसूत्रवन्निरसितव्यम्। तथा प्रत्येकमतापेक्षयापि स्वाभिप्रेतं प्रतिष्ठापयन्तस्तद्वि-

---

**सर्वथेति**। एवं वदन् इदमाह— कथंचित् शब्दादव्यतिरेकोऽर्थस्याभ्युपगम्यते एव जैनैः। अयं चार्थः अभिहाणं अभिहेयाउ होइ भिन्नं अभिन्नं च इत्यादिना प्राग्दर्शित एवेति। **अस्मिंश्च हेताविति**। शब्दप्रतीतावर्थस्य प्रतीयमानत्वाद् इत्येवंरूपे। **अलक्ष्यद्रव्यविवर्तानामिति**। बालानामपि अतिप्रतीतत्वात् अलक्ष्ये इत्युक्तम्, यावता स्फुटमनुभूयमाना अपि केचन वस्तूनां पर्याया अनभिलाप्या एव। यदुक्तम् —

इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते॥

सिद्धान्तरहस्यं चात्र—

पन्नवणिज्जा भावा अणन्तभागो उ अणभिलप्पाणं।
पन्नवणिज्जाणं पुण अणन्तभागो सुयनिबद्धो॥ (विशे० भा०, १४१)
[प्रज्ञापनीया भावा अनन्तभागस्त्वनभिलाप्यानाम्।
प्रज्ञापनीयानां पुनरनन्तभागः श्रुतनिबद्धः॥]

परीतं शब्दार्थं तिरस्कुर्वाणा दुर्नयतामात्मसात्कुर्वन्ति । एतावद्धि प्रमाणप्रतिष्ठितम्, यदुत विधिमुखेन शब्दोऽर्थस्य वाचक इति, न पुनरयं नियमो यथायमस्यैव वाचको नान्यस्य, देशकालपुरुषसंकेतादिविचित्रतया सर्वशब्दानामपरापरार्थाभिधायकत्वोपपत्तेः, अर्थानामप्यनन्तधर्मत्वादेवापरापरशब्दवाच्यत्वाविरोधात्, तथैवाविगानेन व्यवहारदर्शनात्, तदनिष्टौ तल्लोपप्रसङ्गात् । तस्मात् सर्वध्वनयो योग्यतया सर्वार्थवाचकाः, देशक्षयोपशमाद्यपेक्षया तु क्वचित् कथंचित् प्रतीतिं जनयन्ति । ततश्च क्वचिदनपेक्षितव्युत्पत्तिनिमित्ता रूढितः प्रवर्तन्ते, क्वचित् सामान्यव्युत्पत्तिसापेक्षाः, क्वचित्तत्कालवर्तिव्युत्पत्तिनिमित्तापेक्षयेति न तत्र प्रामाणिकेन नियतार्थाग्रहो विधेयः । अतोऽमी शब्दादयो यदा इतरेतराभिमतशब्दार्थोपेक्षया स्वाभिमतशब्दार्थं दर्शयन्ति, तदा नयाः, तस्यापि तत्र भावात् । परस्परबाधया प्रवर्तमानाः पुनर्दुर्नयरूपतां भजन्ति, निरालम्बनत्वादिति । ननु च यद्येकैकधर्मसमर्थनपरायणाः शेषधर्मतिरस्कारकारिणोऽभिप्राया दुर्नयतां प्रतिपद्यन्ते, तदा वचनमप्येकधर्मकथनद्वारेण प्रवर्तमानं सावधारणत्वाच्च शेषधर्मप्रतिक्षेपकारि अलीकमापद्यते, ततश्चानन्तधर्माध्यासितवस्तुसंदर्शकमेव वचनं यथावस्थितार्थप्रतिपादकत्वात्सत्यम्, न चैवं वचनप्रवृत्तिः, घटोऽयं शुक्लो मूर्त इत्याद्येकैकधर्मप्रतिपादननिष्ठतया व्यवहारे शब्दप्रयोगदर्शनात्, सर्वधर्माणां यौगपद्येन वक्तुमशक्यत्वात्, तदभिधायकानामप्यानन्त्यात् । न चैकैकधर्मसंदर्शकत्वेऽप्यमूनि वचनान्यलीकानि वक्तुं पार्यन्ते, समस्तशाब्दव्यवहारोच्छेदप्रसङ्गात्, तदलीकत्वे ततः प्रवृत्त्यासिद्धेरिति । अत्रोच्यते, इह तावद् द्वये वस्तुप्रतिपादकाः, लौकिकास्तत्त्वचिन्तकाश्च । तत्र प्रत्यक्षादिप्रसिद्धमर्थमर्थित्ववशाल्लौकिकास्तावद् मध्यस्थभावेन व्यवहारकाले व्यपदिशन्ति— यदुत नीलमुत्पलं सुगन्धि कोमलमिति, न तु तद्धर्मिगतधर्मान्तरग्रहणनिराकरणयोराद्रियन्ते, अनर्थित्वात्, तावतैव विवक्षितव्यवहारपरिसमाप्तेः । न च तद्वचनानामलीकता, शेषधर्मान्तरप्रतिक्षेपाभावात्, तत्प्रतिक्षेपकारिणामेवालीकत्वात् । परः सर्वं वचनं सावधारणमिति न्यायात् तेषामपि शेषधर्मतिरस्कारित्वसिद्धेर्भवत्वीत्याकीकतापद्यते इति चेत्, न, अवधारणस्य तदसंभवमात्रव्यवच्छेदे व्यापारात् । अनेकपुरुषसंपूर्णे सदसि द्वारादौ स्थितस्य किमत्र देवदत्तः समस्ति नास्तीति वा दोलायमानबुद्धेः केनचिदभिधीयते— यथा देवदत्तोऽस्तीति । अत्र यद्यप्युपन्यस्तपदद्वयस्य सावधार-

---

**देशकालेति** । देशकालपुरुषेषु संकेत आदिर्येषां प्रस्तावादीनां ते तथा, तेषां विचित्रता, तया । तथा हि– कर्कटीशब्दो मालवकादौ फलविशेषे रूढः, गुर्जरादौ तु योन्यामिति । एवं कालादावपि द्रष्टव्यम् । **अविगानेनेति** । विगानं वचनीयता विप्रतिपत्तिरिति यावत् । **तदनिष्टाविति** । तस्य शब्दानामपरापरार्थाभिधायकत्वस्य, अर्थानां त्वपरापरशब्दाभिधेयत्वस्य । **तल्लोपः** व्यवहारलोपः । **सावधारणत्वाच्चेति** । "सर्वं वाक्यं सावधारणम्"–इति

नता गम्यते, अन्यथा तदुच्चारणवैयर्थ्यप्रसङ्गात्, तथाप्यवधारणं तदसंभवमात्रं व्यवच्छिनत्ति, न शेषपुरुषान्तराणि। नापि पररूपेण नास्तित्वम्, तद्व्यवच्छेदाभिप्रायेण प्रस्तुतवाक्यप्रयोगात्, प्रयोक्तुरभिप्रायादिसापेक्षतयैव ध्वनेः स्वार्थप्रतिपादनसामर्थ्यात्। न च वाच्यवाचकभावलक्षणसंबन्धानर्थक्यम्, तदभावे प्रयोक्त्रभिप्रायादिमात्रेण रूपस्यैव नियोक्तुमशक्यत्वात्। न च समस्तधर्मयुक्तमेव वस्तु प्रतिपादयद्वचनं सत्यमित्यभिदध्महे, येनैकैकधर्मालिङ्गितवस्तुसंदर्शकानामसत्यताकता स्यात्, किं तर्हि संभवदर्थप्रतिपादकं सत्यमिति, संभवन्ति च शेषधर्मप्रतिक्षेपे वचनगोचरापन्ना धर्माः, तस्मात् तत्प्रतिपादकं सत्यमेव। यदा तु दुर्नयमताभिनिविष्टबुद्धिभिस्तीर्थान्तरीयैस्तद्धर्मिगतधर्मान्तरनिराकरणाभिप्रायेणैव सावधारणं तत् प्रयुज्यते, यथा नित्यमेव वस्तु अनित्यमेव वेत्यादि, तदा निरालम्बनत्वादलीकतां प्राप्नुवत्केन वार्येत? तत्त्वचिन्तकाः पुनः प्रत्यक्षादिप्रमाणसिद्धमनेकान्तात्मकं वस्तु दर्शयन्तो द्वेधा दर्शयेयुः, तद्यथा– विकलादेशेन सकलादेशेन वा। तत्र विकलादेशो नयाधीनः, सकलादेशः प्रमाणायत्तः। तथा हि— यदा मध्यस्थभावेनार्थित्ववशात् किंचिद्धर्मं प्रतिपिपादयिषवः शेषधर्मस्वीकरणनिराकरणविमुखया धिया वाचं प्रयुञ्जते तदा तत्त्वचिन्तका अपि लौकिकवत् संमुग्धाकारतयाचक्षते — यदुत जीवोऽस्ति कर्ता प्रमाता भोक्तेत्यादि, अतः संपूर्णवस्तुप्रतिपादनाभावाद् विकलादेशोऽभिधीयते, नयमतेन संभवद्धर्माणां दर्शनमात्रमित्यर्थः। यदा तु प्रमाणव्यापारमविकलं परामृश्य प्रतिपादयितुमभिप्रयन्ति, तदाङ्गीकृतगुणप्रधानभावा अशेषधर्मसूचककथंचित्पर्यायस्याच्छब्दभूषितया सावधारणया वाचा दर्शयन्ति स्यादस्त्येव जीवः इत्यादिकया, अतोऽयं स्याच्छब्दसंसूचिताभ्यन्तरीभूतानन्तधर्मकस्य साक्षादुपन्यस्तजीवशब्दक्रियाभ्यां प्रधानीकृतात्मभावस्यावधारणव्यवच्छिन्नतदसंभवस्य वस्तुनः संदर्शकत्वात् सकलादेश इत्युच्यते, प्रमाणप्रतिपन्नसंपूर्णार्थकथनमिति यावत्। तदुक्तम् —

सा ज्ञेयविशेषगतिर्नयप्रमाणात्मिका भवेत्तत्र।
सकलग्राहि तु मानं विकलग्राही नयो ज्ञेयः॥

---

न्यायात्। तद्व्यवच्छेदाभिप्रायेणेति। तस्य देवदत्तादेरसंभवमात्रस्य व्यवच्छेदाभिप्रायेण, देवदत्तोऽस्तीति वाक्यस्योच्चारणात्। 'अप्रयोगाद्' इति तु पाठे किमित्यवधारणम्। शेषपुरुषान्तराणि पररूपेण नास्तित्वं च न व्यवच्छिनत्ति इत्याह तदिति। तेषां शेषपुरुषान्तराणां पररूपेण नास्तित्वस्य व्यवच्छेदाभिप्रायेण प्रस्तुतवाक्यानभिधानात्। प्रयोक्त्रभिप्रायादीति। आदिशब्दात् संकेतादिग्रहः। अङ्गीकृतेत्यादि। अङ्गीकृता गुणप्रधानभावाभ्यामशेषाश्च ते धर्माश्च तेषां सूचकः, कथंचिच्छब्दः पर्यायो नामान्तरं यस्य स कथंचित्पर्यायः, स चासौ स्याच्छब्दश्च तेनालंकृतया॥ २९॥

तदिदमुक्तं भवति—नयप्रमाणाभिज्ञः स्याद्वादी सकलविकलादेशावधिकृत्य वस्तुस्वरूपप्रतिपिपादयिषया यद्यद् ब्रूते तत्तत् सत्यम्, संभवदर्थगोचरत्वात्। दुर्नयमतावलम्बिनः पुनरेकान्तवादिनो यद्यदाचक्षते तत्तदलीकम्, असंभवदर्थविषयत्वादिति ॥ २९ ॥

सांप्रतममुमेवार्थं प्रकटयन् सिद्धान्तेऽप्येकैकनयमतप्रवृत्तानि सूत्राणि न संपूर्णार्थाभिधायकानीति, अपि तु तत्समुदायाभिप्रायप्रवृत्तमविकलवस्तुनिवेदकमिति दर्शयन्नाह—

**नयानामेकनिष्ठानां प्रवृत्तेः श्रुतवर्त्मनि ।**
**संपूर्णार्थविनिश्चायि स्याद्वादश्रुतमुच्यते ॥३०॥**

इह त्रिविधं श्रुतम्, तद्यथा—मिथ्याश्रुतम्, नयश्रुतम्, स्याद्वादश्रुतम्। तत्र श्रूयते इति श्रुतमागमः, मिथ्या अलीकं श्रुतं मिथ्याश्रुतम्, तच्च दुर्नयाभिप्रायप्रवृत्ततीर्थिकसंबन्धि, निर्गोचरत्वात्। तथा नयैर्हेतुभूतैः श्रुतं नयश्रुतम्, एतच्चार्हदागमान्तर्गतमेव, एकनयाभिप्रायप्रतिबद्धं, यथा—'पडुप्पन्ने नेरइए विणस्सइ' इत्यादि, ऋजुसूत्रनयाभिप्रायेण क्षणिकत्वस्यापि तत्र संभवात्। तथा निर्दिश्यमानधर्मव्यतिरिक्ताशेषधर्मान्तरसंसूचकेन स्याता युक्तो वादोऽभिप्रेतधर्मवचनं स्याद्वादः, तदात्मकं श्रुतं स्याद्वादश्रुतम्। तत् किंभूतमुच्यते इत्याह—संपूर्णोऽविकलः स चासावर्थश्च तद्विनिश्चायि तन्निर्णयहेतुत्वादेवमभिधीयते, परमार्थतः पुनः समस्तवस्तुस्वरूपप्रतिपादीत्यर्थः, शब्दात्मकत्वात्, निश्चयस्य बोधरूपत्वादिति। नयश्रुतं तर्हि संपूर्णार्थविनिश्चायि कस्मान्न भवति इत्याह—नयानां नैगमादीनामेकनिष्ठानामेकधर्मग्रहणपर्यवसितानां श्रुतवर्त्मनि आगममार्गे प्रवृत्तेः प्रवर्तनात् न तदेकैकाभिप्रायप्रतिबद्धं संपूर्णार्थविनिश्चायि, तत्समुदायस्यैव संपूर्णार्थविनिश्चायकत्वादित्याकूतम् ॥ ३० ॥

तदेवं नयप्रमाणस्वरूपं प्रतिपाद्याधुना शेषनयप्रमाणव्यापकं तेषां तत्र तादात्म्येनावस्थानात् प्रमातारमभिधातुकाम आह—

---

पडुप्पन्नेति सांप्रतमुत्पन्नस्तत्कालोत्पन्न इत्यर्थः। निरयो दुर्गतिस्तत्र भवो नैरयिको नारकिकः स नश्यति। अथ कथं तत्क्षणोत्पन्नस्य तस्य विनाशः नारकिकाणां जघन्यतोऽपि दशवर्षसहस्रस्थायित्वस्यागमेऽभिधानात् इत्याह ऋजुसूत्रेत्यादि। अयमभिप्रायः— यावन्तो नयास्तावत्समुदायरूपोऽर्हदागमः, "सव्वनयमयं जिणमयं" इति वचनात्। यतो यथा यत्समयविशिष्टः संपूर्णस्वस्थितिधर्मा च प्रथमसमये नैरयिक आसीत्, न तथा द्वितीयसमये इति ऋजुसूत्राभिप्रायेण स्पष्टैव क्षणिकतेति। स्यातेति। अस्तेर्यात्प्रत्ययान्तस्य प्रतिरूपकोऽनेकान्तार्थवृत्तिः स्याच्छब्दोऽव्ययः, अत्र तु सविभक्तिकनिर्देशः शब्दरूपापेक्षया; तेन स्याता, स्यादित्यनेन शब्देन युक्तो वाद इत्यर्थः ॥ ३० ॥

प्रमाता स्वान्यनिर्भासी कर्ता भोक्ता विवृत्तिमान् ।
स्वसंवेदनसंसिद्धो जीवः क्षित्याद्यनात्मकः ॥ ३१ ॥

तत्र त्रिकालजीवनाज्जीवः, प्राणधारक आत्मेत्यर्थः, स प्रमिणोतीति प्रमाता प्रमेयपरिच्छेदकः । किंभूतः सन्नित्याह – स्वान्यौ आत्मपरौ निर्भासयितुं उद्द्योतयितुं शीलमस्येति स्वान्यनिर्भासी, स्वस्वरूपार्थयोः प्रकाशक इति यावत् । तथा करोतीति कर्ता, भुङ्क्ते इति भोक्ता । विवर्तनमपरापरपर्यायेषु गमनं विवृत्तिः परिणामः, सा विद्यते यस्येति विवृत्तिमान् । स्व आत्मा संवेद्यतेऽनेनेति स्वसंवेदनं तेन सम्यक् सिद्धः प्रतिष्ठितः प्रतीतो वा स्वसंवेदनसंसिद्धः । क्षितिः पृथिव्यादिर्येषां तानि क्षित्यादीनि, आदिशब्दादम्बुतेजोवाय्वाकाशानि गृह्यन्ते । न विद्यते आत्मा स्वरूपमस्येत्यनात्मकः, किं स्वस्वरूपापेक्षया ? न, क्षित्यादीनामनात्मकः क्षित्याद्यनात्मकः क्षित्यादिस्वरूपो न भवतीत्यर्थः । तत्र 'जीवः प्रमाता' इत्यनेन ये पारमार्थिकं प्रमातारं नाभ्युपगच्छन्ति अपि तु विज्ञानक्षणपरंपरानुभवबलप्रबोधितानादिप्ररूढवासनासंपादितसत्ताकं मिथ्याविकल्पपरिकल्पितमपारमार्थिकं तं मन्यन्ते प्रतिक्षणविलयवादिनः तान्निराचष्टे, क्षणविलयस्य प्रागेव प्रतिषिद्धत्वात्, बहिरन्तश्च परिणामिवस्तुनः प्रसाधनात् । ननु च घटादयस्तावद्विनाशमाविशन्तो दृश्यन्ते, तेषां च विनाशो लकुटादिकारणकलापेन अविनश्वरस्वभावानां वा क्रियेत विनश्वरस्वभावानां वा । यद्याद्यः कल्पः, तदयुक्तम्, स्वभावस्य प्रच्यावयितुमशक्यत्वात्, तस्य नियतरूपत्वात्, अन्यथा स्वभावत्वायोगात् । अथैवंभूत एव तस्य स्वभावः स्वकारणबलायातो यदुत विनाशकारणमासाद्य विनङ्क्ष्यति इति ब्रूषे, तथापि तद्विनाशकारणसंनिधानं किं यादृच्छिकम्, उत तत्स्वभावसंपाद्यमेव । यदाद्यः कल्पः, तदा संनिहितस्यापि तत्प्रत्यनीकप्रत्ययोपनिपातेन निवर्तनात् तत्संनिधापकहेतूनामपि स्वसंनिधापककारणकलापसापेक्षत्वात् संनिहितानामपि प्रतिद्वन्द्विना निवर्तनात्, यादृच्छिकत्वाच्च नावश्यंभावि तत्संनिधानम्, ततश्चासंनिहितस्वविनाशकारणकदम्बकः कश्चिद्घटादिर्न

---

त्रिकालजीवनादिति । जीवनं पञ्चेन्द्रियमनोवाक्कायोच्छ्वासनिःश्वासायुर्लक्षणदशविधप्राणधारणम्, तच्च यद्यपि मुक्तानां न संभवति, तथापि नाव्यापकम्, यतो मुक्तात्मानो मुक्तेरर्वाग् यथासंभवं दशविधानपि प्राणान् धारितवन्तः, इत्युपचाराद् मुक्तावस्थायामजीवितवन्तोऽपि जीवन्त इत्युच्यन्ते । यद्वा क्षायिकज्ञानदर्शनलक्षणं द्विविधभावप्राणधारणं जीवनम्, अस्मिंश्च पक्षे त्रिकालप्राणधारणं निरुपचारं मुक्तजीवानां विस्पष्टमेव । तत्स्वभावेति विनाश्यस्वभावसंपाद्यम् । तत्संनिधापकहेतूनामिति । तस्य विनाशकारणमुद्गरादेरुपसर्गहेतवः पाण्यादयः । ननु यदृच्छा स्वेच्छावृत्तिरुच्यते, तत्कथमिह हेत्वपेक्षा युज्यते ? सत्यम्, विनाशस्वभावात् यादृच्छिकत्वमिह विवक्षितं न निर्हेतुकत्वम्, निर्हेतुकत्वमपि चाधिकृत्याभिधास्यति यादृच्छिकेत्यादि ।

विनश्येदपि, अनिष्टं चैतत्, सर्वकृतकानां विनाशाविगानात्। अथ द्वितीयः पक्षः, तथा सति पश्चादपि तद्बलाद्विनाशहेतवः संनिधास्यन्ति इति प्रथमक्षणे एव संनिदधतु, तथापि क्षणिकतैवार्थस्य। स्वहेतोरेव नियतकालात् परतोऽयं स्वविनाशहेतुं संनिधापयिष्यतीति एवंरूपो जातइ ति चेत्, न, एवमपि क्षणभङ्गुरतायाता। तथा हि– स्वहेतुना किलासौ वर्षात्परतः स्वविनाशहेतुसंनिधापनक्षमस्वभावो व्यधायि, स च तस्योत्पादक्षणात् द्वितीयक्षणे स्वभावोऽस्ति न वा? अस्ति चेत्, तथा सति पुनर्वर्षं तेन स्थातव्यम्, एवं यावद्वर्षोपान्त्यक्षणेऽपि यदि तत्स्वभाव एवासौ तदापरमपि वर्षान्तरं स्थितिरापद्येत, तदा चानन्तकल्पस्थायी भावः स्यात्, अप्रच्युतवर्षस्थायिस्वभावत्वादिति। अथ द्वितीयक्षणे नास्ति स स्वभाव इति ब्रूषे, हन्त क्षणिकत्वमेवाढौकते, अतादवस्थ्यस्य तल्लक्षणत्वात्। किं च। विनाशहेतुर्भावस्य विनाशं व्यतिरिक्तमव्यतिरिक्तं वा कुर्यात्, व्यतिरिक्तकरणे न किंचित् कृतं स्यात्, ततश्च भावस्तादवस्थ्यमनुभवेत्। तत्संबन्धः क्रियते इति चेत्, संबन्धस्य तादात्म्यतदुत्पत्तिव्यतिरिक्तस्य प्रतिषेधात्। न चानयोरन्यतरः संबन्धोऽत्र समस्ति, व्यतिरेकिणा सार्धं तादात्म्यायोगात्, अन्यहेतुकस्य पश्चादुत्पन्नस्य तदुत्पत्तिवैकल्यात्। तन्न व्यतिरिक्तो विनाशः कर्तुं युक्तः। अव्यतिरिक्तकरणे पुनस्तमेव भावं विनाशहेतुः करोतीति प्राप्तम्, अव्यतिरेकस्य तद्रूपतालक्षणत्वात्। न चासौ कर्तव्यः, स्वहेतोरेव निष्पन्नत्वात्, तत्करणे च तस्यावस्थानमेव स्यान्न प्रलयः। तन्न अविनश्वरस्वभावानां पश्चात् कथंचिदपि विनाशः कर्तुं शक्यः, विनश्वरस्वभावानां पुनः स्वहेतुबलायातत्वात् प्रागपि प्रतिक्षणभावी न कारणान्तरापेक्षः, स्वभावस्य नियतरूपत्वात्, तस्मात् प्राणिति अद्यापि प्रतिक्षणविलय इति। अत्रोच्यते–सत्यमेतत्, किं तु यथा विनाशकारणायोगात् प्रतिक्षणभावीति नाशो भवद्भिः प्रतिपद्यते, तथैव स्थित्युत्पत्ती प्रतिक्षणभाविन्यौ किं न प्रतिपद्येते, तद्धेतूनामपि विचार्यमाणानामयोगात्। तथा हि– स्थितिहेतुना तावत्स्वयमस्थिरस्वभावा भावाः स्थाप्येरन् स्थिरस्वभावा वा। न तावत्प्रथमः पक्षः क्षोदं क्षमते, स्वभावस्यान्यथा कर्तुमशक्यत्वात्, तस्य प्रतिनियतरूपत्वात्, चेतनाचेतनस्वभाववत्, अन्यथा स्वभावताहानेः। द्वितीयपक्षे पुनः स्वयं स्थिरस्वभावानां किं स्थितिहेतुना? परः स्थितिर्नेष्यते एव, तेनानभ्युपगतोपालम्भ एवायमिति चेत्, हन्त हतोऽसि, एवं हि भावाः क्षणमात्रमपि न तिष्ठेयुः। क्षणभाविनीष्यते एवेति चेत्, सा तर्हि अस्थितिस्वभावानां हेतुशतैरपि कर्तुं न पार्यते इति ब्रूमः। तत्स्वभावत्वे पुनर्हेतुव्यापारनैरर्थक्यात्। अहेतुका सती सकल-

कल्पस्थायीति। युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम्– इति लौकिकाः कल्पमाहुः। अत्रेति। भावविनाशयोः। अन्येत्यादि। मुद्गरहेतुकस्य विनाश्योत्तरकालभाविनो विनाशस्य घटादेर्विनाश्यदुत्पत्त्यभावात्। तथैवेति! स्थित्युत्पत्त्योः प्रतिक्षणभावित्वं बौद्धस्याभीष्टमेव, परं तथैव निर्हेतुकत्वेनैवेत्यत्र साध्यम्।

कालं भवतीति दत्तो जलाञ्जलिः प्रतिक्षणविलयस्य, तथोत्पादहेतुरपि तत्स्वभावस्योत्पत्तिं विदध्यात् अतत्स्वभावस्य वा । न तावदाद्यः पक्षः कक्षीकर्तुं युक्तः,स्वयमुत्पादकस्योत्पादने व्याप्रियमाणो हि हेतुः पिष्टं पिनष्टि, शङ्खं धवलयतीति, तदभावेऽपि स्वयोग्यतयोत्पत्तेः। नापि द्वितीयः कल्पोऽङ्गीकरणार्हः, स्वयमनुत्पत्तिधर्मकस्योत्पादयितुमशक्यत्वात्, अन्यथा शशविषाणादयोऽप्युत्पाद्यकोटिमध्यासीरन्, विशेषाभावात्, ततश्च न कश्चिदत्यन्ताभावः स्यात् । तद्यथा--निर्हेतुकत्वात् नाशः प्रतिक्षणभावी, तथैव दर्शितयुक्तेः स्थित्युत्पत्ती अपीति त्रयाक्रान्तं सकलवस्तुजातमभ्युपगन्तव्यम्, तथा सति जीवोऽपि जीवत्वचैतन्यद्रव्यत्वादिभिः स्थेमानमाबिभ्राण एव हर्षविषादादिभिरपरापरार्थग्रहणपरिणामैश्चोत्पादव्ययधर्मकः पारमार्थिकः प्रमातेति बलात् सिद्धिमध्यास्ते । ननु च यद्युत्पादव्ययस्थितीनां निर्हेतुकत्वात् सकलकालभाविता भवद्भिः साध्यते, तदान्वयव्यतिरेकाभ्यां प्रत्यक्षादिप्रमाणप्रसिद्धः खल्वयं तत्कारणकलापव्यापारः कथं नेयः? न चायमपह्नोतुं शक्यः। तथा हि– कुलालादिकारणव्रातव्यापारे घटादयः समुपलभ्यन्ते, तदभावे च नोपलभ्यन्ते इति तज्जन्या इत्युच्यन्ते, स्थितिरपि विनाशकारणसंनिधानात् प्राक् तद्बलादेव, तथा नाशोऽपि मुद्गरादिसंनिधानासंनिधानाभ्यां सदसत्तामनुभवंस्तत्कृतः प्रतीयते, नाहेतुकः, तत्कथमेतदिति । अत्रोच्यते- न वयं सर्वथा हेतूनां व्यापारं वारयामः, किं तर्हि स्वयमुत्पादव्ययस्थित्यात्मना विवर्तमानस्य द्रव्यस्य हेतवस्तद्विशेषकरणे व्यापारमनुभवन्ति, तेनैव सार्धं तेषामन्वयव्यतिरेकानुकरणदर्शनात्, दृष्टस्य चापह्नवेऽस्माकमप्रवृत्तत्वात्, प्रतीतियुक्तिलक्षणद्वयपक्षपातित्वात्, केवलं प्रतीतिविकलां युक्तिं युक्तिविनाकृतां वा प्रतीतिं नाङ्गीकुर्महे, असंभवदर्थगोचरतया निरालम्बनत्वात्तस्या इत्यास्तां तावत् । 'स्वान्यनिर्भासि' इत्यनेन प्रागुक्तस्वपराभासि प्रमाणविशेषणवन्मीमांसकान् परोक्षबुद्धिवादिनो योगाचारांश्च ज्ञानमात्रवादिनः प्रतिक्षिपति । कथम्? ज्ञानज्ञानिनोः कथंचिदभेदेन तदुक्तन्यायाविशेषादिति । 'कर्ता भोक्ता' इति विशेषणद्वयेन सांख्यमतं विकुट्टयति, कर्ता सन् भोक्तापि इति काक्वोपन्यासात्, अकर्तुर्भोगानुपपत्तेः, भुजिक्रियानिर्वर्तनसमर्थस्यैव भोक्तृत्वात् । जपाकुसुमादिसंनिधानवशात् स्फटिके रक्तत्वादिव्यपदेशवदकर्तुरपि प्रकृत्युपधानवशात् सुखदुःखादिभोगव्यपदेशो युक्तः । तथा हि-- 'प्रकृतिविकारदर्पणाकार-

**ननु चेत्यादि** । पूर्वं हि बौद्धेन विनाशस्य निर्हेतुकत्वेऽभिहिते परोपन्यस्ते युक्तिकलापेनैव मत्पक्षः सेत्स्यतीति मन्यमानेनाचार्येणोत्पादस्थिती अपि निर्हेतुके प्रत्यपादिषाताम्, तटस्थः पुनः सर्वत्रापि सहेतुकत्वं पश्यन्नेवं पूर्वपक्षयति । समाधानाभिप्रायस्तु सकलमपि त्रिलोकीगतं मृदादिद्रव्यमात्मनैव प्रतिक्षणमुदयव्ययध्रौव्यात्मकम्, कुलाललगुडादयस्तु घटघटीकपालादिविशेषकरणे एव व्याप्रियन्ते इति । **अकर्तुरिति** । यदाहुः सांख्याः– प्रकृतिः करोति पुरुष उपभुङ्क्ते–इति । **प्रकृतिविकारेत्यादि** । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः,

बुद्धिसंक्रान्तानां सुखदुःखात्मकानामर्थानां पुरुषः संनिधानमात्रेण भोजको व्यपदिश्यते, बुद्ध्यध्यवसितमर्थं पुरुषश्चेतयते '— इति वचनादिति चेत्, न, कथंचित् सक्रियाकताव्यतिरेकेण प्रकृत्युपधानेऽप्यन्यथात्वानुपपत्तेः, अप्रच्युतप्राचीनरूपस्य व्यपदेशानर्हत्वात्, तत्प्रच्यवे च प्राक्तनरूपत्यागेनोत्तररूपाध्यासिततया सक्रियत्वमापततीति न्यायात्। स्फटिकदृष्टान्तेऽपि जपाकुसुमादिसंनिधानादन्धोपलादौ रक्ततानाविर्भवन्ती तस्य तथाविधं परिणामं लक्षयति, अन्यथान्धोपलवत्तत्रापि न प्रादुःष्यात्, तन्नाक्रियस्य भोक्तृतोपपद्यते इति। ' विवृत्तिमान् ' इत्यमुना त्वेकान्तनित्यमपरिणामिनं नैयायिकवैशेषिकादिप्रकल्पितं प्रमातारं निरस्यति, सर्वथा अविचालितरूपस्यार्थग्रहणपरिणामानुपपत्तेः। व्यतिरिक्तज्ञानसमवायादेकान्तनित्योऽपि प्रमिणोतीति चेत्, न, समवायस्य प्रागेव प्रतिक्षिप्तत्वात्, संबन्धान्तरस्य च व्यतिरेकिणा साकमनुपपत्तेः, अन्यत्र अन्यथानुपपन्नत्वात्। न च व्यतिरेकिणि ज्ञाने समस्ति, तद्ग्राहकप्रमाणाभावात्, अव्यतिरेकानुभवस्य च तद्बाधकत्वात्। किं च

---

तस्या विकारो वैषम्यम्, स चासौ निर्मलत्वेन प्रतिबिम्बोत्पत्तियोग्यत्वात् दर्पणाकारा चासौ बुद्धिश्च तत्र प्रतिबिम्बितानां सुखदुःखादिरूपाणामर्थानामात्मा प्रकृतिसंनिधानात् भोक्ताभिधीयते। अयमभिप्रायः– अर्थास्तावत् प्रकृत्यात्मके बुद्धिदर्पणे पूर्वं प्रतिबिम्ब्यन्ते, प्रकृत्यभिन्नत्वभावार्थप्रतिबिम्बवर्ता बुद्धिः, आत्मनीत्येष प्रतिबिम्बलक्षणो भोगः। वादमहार्णवोऽप्यस्मिन् दर्शने स्थितः प्राह – बुद्धिदर्पणसंक्रान्तसमर्थप्रतिबिम्बकं द्वितीयदर्पणकल्पे पुंस्यध्यारोहति, तदेवं भोक्तृत्वमस्य, न तु विकारापत्तिः – इति। तथा चाहुरासुरिप्रभृतयः –

विविक्तदृक्परिणतौ बुद्धौ भोगोऽस्य कथ्यते।
प्रतिबिम्बोदयः स्वच्छे यथा चन्द्रमसोऽम्भसि ॥

अस्यार्थः—विविक्ता स्पष्टा ईदृग् विषयाकारपरिणतेन्द्रियाकारा परिणतिर्यस्या बुद्धेः सा तथा, तस्यां सत्यामस्यात्मनो भोगः कथ्यते। किंस्वरूपः ? प्रतिबिम्बोदयः, न वास्तवः। प्रतिबिम्बमात्रे दृष्टान्तमाह— यथा चन्द्रमसो निर्मले जले प्रतिबिम्बनम्, एवं विशिष्टाकारपरिणताया बुद्धेरात्मनीति। विभक्तेत्यादिपाठान्तरेण व्याख्यानान्तरं तु हरिभद्रसूरिकृत नेह प्रकाश्यते, बहुव्याख्याने व्यामोहप्रसङ्गात्। अन्ये तु विन्ध्यवासिप्रभृतयः—

पुरुषोऽविकृतात्मैव स्वनिर्भासमचेतनम्।
मनः करोति सांनिध्यादुपाधिः स्फटिकं यथा ॥

इति भोगमाचक्षते। व्याख्या— यथोपाधिर्जपापुष्पपद्मरागादिरतद्रूपमपि स्फटिकं स्वाकारां रक्तादिच्छायां करोति, एवमयमात्मा स्वरूपादप्रच्यवमानः चैतन्यं पुरुषस्य स्वं वचनमिति वचनादचेतनमपि मनो बुद्धिलक्षणमन्तःकरण स्वनिर्भासं चेतनमिव करोति सांनिध्यात्, न पुनर्वस्तुतो मनसश्चैतन्यम्, विकारित्वात्। तथा हि– मनोऽचेतनम्, विकारित्वात्, घटवदिति। **अन्धेति**। अन्धोपलः प्रतिबिम्बोत्पादनानर्हः खरटः पाषाणः।

यदि समवायबलादात्मनि ज्ञानं समवैति, तदा आत्मनां समवायस्य च विभुत्वादेकरूपत्वाच्च सर्वात्मसु किं न समवैति? विशेषाभावात्, तथा च देवदत्तज्ञानेन यज्ञदत्तादयोऽप्यर्थतत्त्वं बुद्ध्येरन्। अन्यच्च विज्ञानोदयसमयेऽपि यादृशः प्रागवस्थायां तादृश एव संतिष्ठमानः प्रागप्रमाता पश्चात् प्रमातेति ब्रुवाणः खलून्मत्ततामात्मनि आविर्भावयति, नापरमित्यास्तां तावत्। पश्चार्धेन पुनर्भूतव्यतिरेकिणं स्वसंवेदनप्रत्यक्षनिर्ग्राह्यं जीवं दर्शयन्चार्वाकदर्शनं तिरस्कुरुते, जडात्मकभूताव्यतिरेके हि तद्विलक्षणबोधरूपहर्षविषादादिविवर्तानुभवाभावप्रसङ्गात्। ननु च कायाकारपरिणतानि भूतान्येवात्मव्यतिरेकिणीं चेतनामुत्कालयन्ति, सा च तथाविधपरिणामपरिणतेषु तेषु संतिष्ठते तदभावे पुनस्तेष्वेव निलीयते इति तद्व्यतिरेकानुभवेऽपि न परलोकयायिजीवसिद्धिः इयतैव दृष्टव्यवहारोपपत्तेः। नैतदस्ति, द्वयं हि तावदेतत् संयोगमनुभवदुपलभ्यते-- पञ्चभूतात्मकं शरीरं चेतना च। तत्रापि शरीरं बहिर्मुखाकारेण बोधनार्थरूपतया जडमनुभूयते, चेतना पुनरन्तर्मुखाकारेण स्वसंवेदनप्रत्यक्षेण साक्षात्क्रियते, अत एवान्यतिरेकः पक्षः प्रतिभासनिराकृतत्वान्नाशङ्कितः, व्यतिरेकिणोः पुनः प्रकाशजनयोः यदि भूतान्येव चेतनामुत्कालयन्तीति भवद्भिः परिकल्प्यते, तदा चेतनैव भवान्तरादुत्पत्तिस्थानमायाता पञ्चभूतभ्रान्तिजनकं शरीरं निर्वर्तयेत्, पुनर्भवान्तरं यातुकामा मुञ्चेत्, तत्तयाधिष्ठितं गमनादिचेष्टां कुर्यात्, तद्वियुक्तं पुनः काष्ठवत्तिष्ठेदिति जीवसंपाद्यमेव शरीरम्, न पुनरसौ तत्संपाद्य इति। एतत्परिकल्पनं युक्ततरं पश्यामः, जीवस्य चेतनावतः सकर्मकतयापरापरभवभ्रमणपरापरशरीरनिर्वर्तनयोरुपपद्यमानत्वात्। भवान्तरादागच्छन्नुत्पत्तिस्थानं जीवोऽध्यक्षेण नोपलभ्यते इति चेत्, भूतान्यपि तर्हि कायाकारधारणद्वारेण चेतनामुत्कालयन्तीति प्रत्यक्षेण नोपलक्ष्यन्ते इति समानो न्यायः। अथ कायाकारपरिणतेष्वेव भूतेषु चेतनोपलभ्यते नान्यदा इत्यन्यथानुपपत्तिवशात् तज्जन्येति परिकल्प्यते, एवं तर्हि मृतावस्थायां कायाकारमाबिभ्राणेष्वपि नोपलब्धा, कायाकारपरिणामो वा कादाचित्कतया हेत्वन्तरापेक्षी इत्यन्यथानुपपत्तिवशादेव तन्निर्वर्तनक्षमा चेतना भवान्तरागतचेतना जीवसंबन्धिनीति प्रतिपद्यामहे। किं च, जीवस्तावत् कर्मचैतन्यसंबन्धाच्छरीरनिर्वर्तनार्थं प्रवर्तेत इति युक्तमेवैतत्, भूतानि पुनः किंभूतानि चेतनाकरणे प्रवर्तेरन् सचेतनानि निश्चेतनानि वा? यद्याद्यः कल्पः, ततो विकल्पयुगलमवतरति— तच्चैतन्यं तेभ्यो भिन्नमभिन्नं वा? यदि भिन्नं तदा पुरुषशरीरवत् तत्रापि भूतैः सह वर्तमानमपि भूतविलक्षणमात्म-

---

**तदिति** अन्यथानुपपन्नत्वम्। **तद्बाधकत्वात्** व्यतिरेकबाधकत्वात्। **उत्कालयन्तीति**। कल–पिल–डिप क्षेपे चुरादावदन्तः, अधिकीकुर्वन्तीत्यर्थः। **तज्जन्येति** कायाकारपरिणामजन्या। **तन्निर्वर्तनेति** कायाकारपरिणामोत्पादनसमर्था। **पुरुषशरीरेत्यादि**। यथा पुरुष-

**कारणमनुमापयतीति तदवस्थैव जीवसिद्धिः । अथाभिन्नम्, तथा सति समस्तभूतानामैक्यं प्रसजति, एकचैतन्याव्यतिरिक्तत्वात्, तत्स्वरूपवत् । निजनिजचैतन्याव्यतिरेकीणि भूतानि तेनायमदोष इति चेन्न, तत्संपाद्यपुरुषशरीरेऽपि तज्जन्यपञ्चचैतन्यप्रसङ्गात् । पञ्चापि संभूय बृहत्पुरुषचैतन्यं बहवस्तिला इव तैलघटं जनयन्तीति चेत्, तत्तर्हि पुरुषचैतन्यं किं तेषामेव संयोगो यद्वा तदुत्पाद्यमन्यदेव? यद्याद्यः कल्पः, तदयुक्तम्, चैतन्यानां परस्परं मिश्रणाभावेन संयोगविरोधात्, इतरथा बहुपुरुषचैतन्यानि संभूय बृहत्तमचैतन्यान्तरमारभेरन् । अथ द्वितीयः पक्षः, तत्रापि तेषां किमन्वयोऽस्ति नास्ति वा? यद्यस्ति, तदयुक्तम्, प्राग्वत्तज्जन्यचैतन्यपञ्चरूपतापत्तेः । अथ नास्ति, तदप्यचारु, निरन्वयोत्पादस्य प्रमाणबाधितत्वात्, तन्न सचेतनानि भूतानि चेतनाकरणे व्यापारभाञ्जि भवितुमर्हन्ति । नापि निश्चेतनानि, तेषामत्यन्तविलक्षणतया चैतन्योत्पादविरोधात्, इतरथा सिकतादय-**

शरीरे यच्चैतन्यं तत् स्वोत्पत्तये शरीरजनकेषु भूतेषु चैतन्यं कल्पयति । **तथा तत्रापीति ।** तेष्वपि भूतेषु तैर्भूतैः सह वर्तते यच्चैतन्यं तदपि स्वजनकेषु भूतेषु तेभ्यो भूतेभ्यो भिन्नमात्महेतुमपरं चैतन्यं गमयतीति । **तदवस्थेति ।** अनवच्छिन्नचैतन्यसंतानस्य जीवरूपत्वादित्यभिप्रायः । **निरन्वयोत्पादस्य प्रमाणबाधितत्वादिति ।** अनुवृत्तव्यावृत्तवस्तुग्रहणपरिणामः प्रत्यक्षं, यथा च तेन मृत्पिण्डादुत्पद्यमानं घटादि मृद्द्रव्यात्मनानुगतम्, घटघटीशरावोदञ्चनाद्यपि पर्यायापेक्षया व्यावृत्तं वीक्ष्यते, न च भेदाविशेषेऽपि घटपटादिष्विव स्थासकोशादिषु विलक्षणैव प्रतिपत्तिः, तथा चैतन्यमपि पूर्वचैतन्यादुत्पद्यमानं चिद्रूपतयानुवृत्तं सितपीतादिबोधरूपतया तु व्यावृत्तं स्वसंवेदनप्रत्यक्षेणैव व्यवस्थाप्यते इति प्रत्यक्षसिद्धान्वयः, तेन च निरन्वयोत्पादैकान्तो बाधितः । तथा च---पूर्वो ज्ञानक्षण उत्पद्यमानक्षणात् कथंचिदभेदी, उपादानत्वे सति कारणत्वात्, यः पुनः कथंचिदभेदी न भवति नासावुपादानत्वे सति कारणम्, यथा आलोकः, न चायमुपादानत्वे सति न कारणम्, तस्मात् कथंचिदभेदीति । उपादानत्वं हि कार्ये कथंचित् स्वरूपाभेदमन्तरेण व्याहतम्, तच्च सहकारिणामपि प्रसङ्गादेकान्तभेदे नोपपद्यते । तत्र भेदसाधिकायामेव स्वव्यापकमुपादानत्वमपि निवर्तयतीति व्याप्तिसिद्धिः । ततः स्थितमेतत् प्रमाणबाधितत्वादिति । **अत्यन्तविलक्षणतया चैतन्योत्पादविरोधादिति ।** अयमभिप्रायः—भूतैश्चैतन्यं जन्यते इति भूतान्येव चैतन्यरूपतया परिणमन्ते इति परिणाम एवोत्पादार्थो भवतामभिप्रेतः, न चात्यन्तवैलक्षण्ये परिणामो घटामियर्ति, एतच्च प्रत्यक्षसिद्धमेव, तथापि दृढत्वाद् विप्रतिपत्तेरनुमानमप्यभिधीयते—चैतन्यं विजातीयपरिणामो न भवति, उत्पत्तिमत्त्वात्, यदुत्पत्तिमत् न तद्विजातीयपरिणामः, यथा मृदात्मना सजातीयस्य मृत्पिण्डस्य परिणामो घटः, उत्पत्तिमच्चैतन्यम्, तस्मात् न विजातीयपरिणामः । उत्पत्तिमत्त्वं सजातीयपरिणामत्वेन व्याप्तम्, तद्विरुद्धं च विजातीयपरिणामत्वम् । तत उत्पत्तिमत्त्वं स्वव्यापकाविरुद्धाद् विजातीयपरिणामत्वाद् विनि-

स्तैलादिकरणे व्याप्रियेरन् । किं च तत्समुदायमात्रसाध्यं वा चैतन्यं स्यात्, विशिष्टतत्परिणामसाध्यं वा? न तावदाद्यो कल्पः, इलाजलानलानिलनभस्तलमीलनेऽपि चेतनानुपलब्धेः । द्वितीयविकल्पे सा पुनः किं वैशिष्ट्यमिति वाच्यम् । कायाकारपरिणाम इति चेत्, स तर्हि सर्वदा कस्मान्न भवति? कुतश्चिद्धेत्वन्तरापेक्षणादिति चेत्, तर्हि हेत्वन्तरं भवान्तरायातजीवचैतन्यमित्यनुमिमीमहे, तस्यैव कायाकारपरिणामसाध्यचैतन्यानुरूपोपादानकारणत्वात्, तद्विरहे कायाकारपरिणामसद्भावेऽपि मृतावस्थायां तदभावात् गमनादिचेष्टानुपलब्धेः, तन्न कायाकारपरिणामजन्यचैतन्यम्, अपि तु स एव तज्जन्य इति युक्तं पश्यामः । न प्रत्यक्षादन्यत् प्रमाणमस्ति, न च तेन परलोकगमनागमनादिकं चैतन्यस्योपलक्ष्यते, तेन दृष्टान्येव भूतानि तत्कारणतया कल्पनीयानीति चेत्, न, केवलप्रत्यक्षप्रतिक्षेपेण प्रमाणान्तराणां प्रागेव प्रसाधितत्वात्, तथा च भूयांस्यनुमानानि परलोकानुयायिजीवसाधकानि प्रवर्तेरन् । तद्यथा— तदहर्जातबालकस्य आद्यस्तनाभिलाषः पूर्वाभिलाषपूर्वकः, अभिलाषत्वात्, द्वितीयदिवसादिस्तनाभिलाषवत् । तदिदमनुमानमाद्यस्तनाभिलाषस्याभिलाषान्तरपूर्वकत्वमनुमापयदर्थापत्त्या परलोकयायिजीवमाक्षिपति, तज्जन्मन्यभिलाषान्तराभावात्, एवमन्यदप्युदाहार्यमित्यास्तां तावत् । तदयं स्वपरप्रकाशः कर्ता भोक्ता नित्यानित्यात्मको भूतविलक्षणः साक्षात्कृतकतिचिन्निजपर्याया-

वृत्तं सत् सजातीयपरिणामत्वेऽवतिष्ठते इति विरुद्धव्यापकोपलब्धिः । सजातीयपरिणामत्वं वा साध्यम् । चैतन्यं सजातीयकारणपरिणामम्, उत्पत्तिमत्त्वात्, यदेवं तदेवम्, यथा मृत्परिणामो घटः; तथा चेदम् सजातीयपरिणामम् । तन्न निश्चेतनानि भूतानि चेतनाकरणे प्रवृत्तिभाञ्जि भवितुमर्हन्तीति स्थितम् । अर्थापत्त्येति । यथा करतलाग्निसंयोगात् स्फोटः प्रत्यक्षेणोपलक्ष्यमाणो वह्नेर्दाहिकां शक्तिमुपकल्पयतीति, एवमेतस्मादनुमानादनुमीयमानो जन्माद्यस्तनाभिलाषात् प्राचीनोऽभिलाषश्चेतनावन्तमन्तरेणोपपद्यते- स्तम्भकुम्भाम्भोरुहादेरपि प्रसङ्गात् । यश्चेतनावान् स परलोकगामी जीव इति । एवमन्यदप्युदाहार्यमिति । सात्मकं जीवच्छरीरम्, प्राणादिमत्त्वात्, यत् पुनर्निरात्मकं न तत् प्राणादिमत् यथा कुम्भः, प्राणादिमच्च जीवच्छरीरम्, तस्मात् सात्मकमिति । साक्षादित्यादि । स्वसंवेदनप्रत्यक्षीकृतैः सत्त्वप्रमेयत्वद्रव्यत्वचिद्रूपत्वादिभिः कतिपयैः स्वपर्यायैरनुमितोऽनाद्यनन्तकालभाविनामात्मीयानन्तपर्यायाणां व्यावृत्तः परिणामो यस्य जीवस्य स तथा । तथा हि- वर्तमानात्मपर्यायास्तदात्मपर्यायान्तरपूर्वकाः, तान् विना तदनुपपत्तेः, यद्विना यन्नोपपद्यते तत् तत्पूर्वकम् यथा बीजमन्तरेणानुत्पद्यमानोऽङ्कुरो बीजपूर्वः, नोत्पद्यन्ते च पूर्वपर्यायानन्तरेण वर्तमानपर्यायाः, अतस्तेऽपि तत्पूर्वकाः । निर्हेतुकत्वप्रसङ्गो विपर्यये बाधकं प्रमाणम् । एवं वर्तमानाः पर्यायाः पर्यायान्तरजनकाः, वस्तुत्वात्, यद् वस्तु तत् पर्यायान्तरस्य जनकम्, यथा घटः कपालानाम्, वस्तूनि च विवादाध्यासिताः, तस्मात् पर्यायान्तरजनकाः । अत्राप्यवस्तुत्वप्रसङ्गो विपर्यये बाधकः, पर्यायाणां च पर्यायिणोऽभिन्नत्वात् वस्तु वस्त्वन्तरस्य जन्यं जनकं चेत्युक्तं

नुमितानाद्यनन्तकालभाविनिजानन्तपर्यायविवर्तः प्रमाणप्रतिष्ठितः पारमार्थिको जीवः सकलनयप्रमाणव्यापकः प्रमातेति स्थितम् ॥ ३१ ॥

सांप्रतं पर्यन्तश्लोकेन प्रकरणार्थमुपसंहरन्नाह —

प्रमाणादिव्यवस्थेयमनादिनिधनात्मिका ।
सर्वसंव्यवहर्तॄणां प्रसिद्धापि प्रकीर्तिता ॥ ३२ ॥

प्रमाणानि प्रत्यक्षादीनि, आदिशब्दात् नयपरिग्रहस्तेषां व्यवस्था प्रतिनियतलक्षणादिरूपा मर्यादा सेयमनन्तरोक्तस्थित्या प्रकीर्तितेति संसर्गः । किंभूता? आह— आदिः प्रभवः, निधनं पर्यन्तः, न विद्यते आदिनिधने यस्यासौ तथाविध आत्मा स्वरूपमस्याः सा अनादिनिधनात्मिका सर्वसंव्यवहर्तॄणां लौकिकतीर्थिकादिभेदभिन्नसमस्तव्यवहारवतां प्रसिद्धापि रूढापि, तदप्रसिद्धौ निखिलव्यवहारोच्छेदप्रसङ्गात्, तदुच्छेदे च विचारानुत्थानेन कस्यचित्तत्त्वस्य न प्रतिष्ठितिः, प्रकीर्तिता संशब्दिता, अव्युत्पन्नविप्रतिपन्नव्यामोहापोहायेति गम्यते, प्रमाणप्रसिद्धेऽप्यर्थे प्रबलावरणकुदर्शनवासनादितः केषांचिदनध्यवसायविपर्यासरूपव्यामोहसद्भावात्, तदपनोदार्थं च सति सामर्थ्ये करुणावतां प्रवृत्तेरिति ॥ ३२ ॥

स्याद्वादकेसरिसुभीषणनादभीतेरुत्रस्तलोलनयनान् प्रपलायमानान् ।
हेतुर्नयाश्रितकुतीर्थिमृगाननन्यत्राणान् विहाय जिनमेति तमाश्रयध्वम् ॥ १ ॥

---

भवति । सकलनयप्रमाणव्यापक इति । ज्ञातुराशयात्मानो (नीयमाना) नयाः, प्रमाणानि प्रागभिहितस्वरूपाणि, ततः सकलशब्देन विशेषणसमासे तेषां व्यापकः वृक्षत्वमिव शिशपात्वस्य । अयमभिप्राय — आत्मा हि ज्ञानरूपो नयप्रमाणे तु ज्ञानविशेषरूपे, ततो यथा वृक्षत्वविशेषः शिंशपात्वं वृक्षत्वसामान्येन व्याप्यते, एवं ज्ञानविशेषात्मके नयप्रमाणे सामान्यज्ञानरूपेणात्मना व्याप्येते इति ॥ ३१ ॥

लौकिकतीर्थिकादीति । लौकिका हलधरादयः, तीर्थिका नैयायिकादयः, आदिशब्दात् शेषपाखण्डिपरिग्रहः । वासनादित इति । आदिशब्दात् विप्रतारकवचनादिग्रहः ॥ ३२ ॥

साम्प्रतं शास्त्रपरिसमाप्तौ शास्त्रकृत् सिद्धः परसमङ्गलपदे भगवति जिने स्वयमत्यन्तानुरागादतिवत्सलतया परेषामपि तदा तदाधानाय तावदुपदेशमाह स्याद्वादेत्यादि । स्याच्छब्दो अस्तेर्यात्प्रत्ययान्तस्य प्रतिरूपकोऽव्ययः, स च यद्यपि विधिविचारणास्तित्वविवादानेकान्तसंशयाद्यर्थवृत्तिः, तथाऽप्यनेकान्तवृत्तिरिह गृह्यते, एकान्तप्रतिक्षेपस्यैवात्र प्रस्तुतत्वात्, तेनोपलक्षितो वादो स्याद्वादः, स एव केसरिसिंहः, कि कित ज्ञाने—इत्यस्य औणादिके दन्त्यादौ सरप्रत्यये केसरः सटा, तथा च शृङ्गारप्रकाशेऽपि—के मस्तके सरतीति केसर इत्यखण्डयत् । स चायं केसरशब्द पुंनपुंसकः, मत्वर्थीयेन्प्रत्ययान्तश्च सिंहे वर्तते, तस्यातिभैरवः परप्रवादिमृगपूगभयंकरत्वाद् नादो वादकालभावी वाग्विलासस्तस्मात् भीतिस्तस्याः । अयमत्र समुदायार्थः— शरणविकलपुरुष इव हेतुः सत्त्वादिः कमपि शरणाय शरण्यं मार्ग्य-

भक्तिर्मया भगवति प्रकटीकृतेयं तच्छासनांशकथनाञ्च मतिः स्वकीया ।
मोहादतो यदिह किंचिदभूदसाधु तत्साधवः कृतकृपा मयि शोधयन्तु ॥ २ ॥
न्यायावतारविवृतिं विविधां विधित्सोः सिद्धः शुभो य इह पुण्यचयस्ततो मे ।
नित्यः परार्थकरणोद्यतमा भवान्ताद् भूयाज्जिनेन्द्रमतलम्पटमेव चेतः ॥ ३ ॥

इति न्यायावतारविवृतिः समाप्ता ॥

कृतिरियमाचार्यसिद्धव्याख्यानिकस्य । ग्रन्थाग्रम् २०७३ ॥

---

माणः स्याद्वादसिंहनादभयात् स्वयमपि पलायमानान् कुतीर्थिमृगान् परित्यज्यानन्याशरणतयायं जिनमाश्रयति । अन्यत्र क्वचित् कथंचित् हेत्वाभासतोपपत्त्या अत्रैव स्वरूपं लभते, तमेव जिन यूयमपि भव्याः भजध्वम् । युक्तं चैतत् पक्षपातरहितानां सर्वहेतुपुरःसरमेव मतेर्निवेशादिति । यथैकान्तक्षणिकत्वे नित्यत्वे वा न कश्चित् हेतुरुपपद्यते, तथा प्रागेव स्वयमेव वृत्तिकृता प्रपञ्चितमिति ॥ अधुना औद्धत्यमात्मनः परिहरन् सुलभत्वात् छद्मस्थानां मोहस्य शास्त्रशोधने, ततः प्रार्थयन्नाह भक्तिरित्यादि । तच्छासनांशेति । तस्य भगवतो जिनस्य शासनमागमः, तस्यांशो लवस्तदभिधानात् । अत इति । यतो भक्तिर्व्यक्ता कृता, न तु गर्वोद्धुरकंधरतया स्वमनीषिका प्रकाशितेति ॥ सांप्रतं वैदग्ध्यमिधीनं दर्शयन् ग्रन्थकारः परमपदप्राप्तौ बीजभूतां प्रार्थनामाह न्यायेत्यादि । सिद्ध इति । निष्पन्नः । अथ च व्याजेन ग्रन्थकर्ता स्वनामाभिधानद्वारेण सिद्धव्याख्याता प्रकरणमिदमकरोदिति प्रकाशितम् । जिनेन्द्रमतलम्पट इति । ननु च लाम्पट्यं सर्वानर्थहेतुत्वेन न प्रेक्षावतां प्रार्थनाविषयः, तत्कथं तद् भूयादित्याशास्यते ? सत्यम्, विषयाद्यभिष्वङ्गरूपमेव लाम्पट्यमनर्थपरंपराहेतुत्वेन न प्रेक्षावद्भिराकाङ्क्ष्यते । श्रवणमननध्यानादिरूपतया तु भगवद्वचनविषयं तत्परत्वं लाम्पट्यमपि परंपरया परमपदप्राप्तिहेतुत्वेन दक्ष प्रेक्षावतामाकाङ्क्ष्यमाणं परमाभ्युदयहेतुरेव ॥

अक्षामधाम्नोऽभयदेवसूरेर्भानोरिवोज्जृम्भितभव्यपद्मात् ।
अभूत्ततो हर्षपुरीयगच्छे श्रीहेमचन्द्रप्रभुरगुणराशिः ॥ १ ॥

जीयात्तृणीकृतजगत्त्रितयो महिम्ना श्रीहेमसूरिरिति शिष्यमणिस्तदीयः ।
क्षीरोदविभ्रमयशःपटलेन येन शुभ्रीकृता दश दिशो मलधारिणापि ॥ २ ॥
शैशवेऽभ्यस्यता तर्के रतिं तत्रैव वाञ्छता ।
तस्य शिष्यलवेनेदं चक्रे किमपि टिप्पनम् ॥ ३ ॥
न्यायावतारविवृतौ विषमं विभज्य किंचिन्मया यदिह पुण्यमवापि शुद्धम् ।
संत्यज्य मोहमखिलं भुवि शश्वदेव भद्रैकभूमिरमुना तु समस्तलोकः ॥ ४ ॥

इति न्यायावतारटिप्पनकं समाप्तम् ॥ ग्रन्थाग्रं १०५३ ॥

---

# APPENDIX

## I

### श्रीसिद्धर्षिटीकोद्धृतानां श्लोकानां सूची

अतस्मिंस्तद्ग्रहो भ्रान्तिः ( दिङ्नाग–प्रमाणसमुच्चय ) ३७.
अनुमेयेऽथ तत्तुल्ये ( दिङ्नाग–प्रमाणसमुच्चय ) ३४.
गृहीत्वा वस्तुसद्भाव ( कुमारिल–श्लोकवार्तिक ) २२.
तस्माद्यद्दृश्यते तत्स्यात् ( कुमारिल–श्लोकवार्तिक ) २२.
तेनान्यापोहविषयाः ( दिङ्नाग–प्रमाणसमुच्चय ) ४.
न तावदिन्द्रियेणैषा ( कुमारिल–श्लोकवार्तिक ) २२.
प्रत्यक्षं कल्पनापोढ– ( धर्मकीर्ति–न्यायबिन्दु ) २९.
प्रमाणपञ्चकं यत्र ( कुमारिल–श्लोकवार्तिक ) २२.
मनसोर्युगपद्वृत्तेः ( दिङ्नाग–प्रमाणसमुच्चय ) ५.
विकल्पयोनयः शब्दाः ( दिङ्नाग ? ) ४४.
सा ज्ञेयविशेषगतिः ( ? ) ९२.

## II

### टिप्पनोद्धृतानां श्लोकानां सूची

अणुहूयदिट्ठाचिन्तिय ( जिनभद्र–विशे० भा० ) ११.
अनिरूपिततत्त्वार्थो ( धर्मकीर्ति ? ) ३८.
अन्यदेव हि सामान्यं ( सङ्ग्रहश्लोक ) ७६.
अप्सु गन्धो रसश्चाग्नौ ( कुमारिल–श्लोकवार्तिक ) २२.
अब्भत्थेऽवाओ च्चिय ( जिनभद्र–विशे० भा० ) ६९.
अभिहाणं अभिहेयाउ ( भद्रबाहु–निर्युक्ति ? ) ३
अयोग योगमपरैः ( धर्मकीर्ति–प्रमाणविनिश्चय ) १७.
अर्थो ज्ञानसमन्वितो ( बौद्धग्रन्थ–ज्ञानश्री ? ) ७८.
आहुर्विधातृ प्रत्यक्षं ( वैशेषिकाः ? ) ७६.
इक्षुक्षीरगुडादीनां ( ? यदुक्तम् ) ९०.
उद्ग्राहितमुपन्यस्ते ( अजय–कोश ) ३२.
उप्पलदलसयवेहो ( जिनभद्र–विशे० भा० ) ६९.
एकस्यापि ध्वनेर्वाच्यं ( संग्रहश्लोक ) ८२.
एगन्तेण परोक्खं ( जिनभद्र–विशे० भा० ) १५.
कीदृग्गवय इत्येव ( कुमारिल–श्लोकवार्तिक ) १९.
केसिंचि इंदियाइ ( जिनभद्र–विशे० भा० ) १५.
क्षीरे दधि भवेदेवं ( कुमारिल–श्लोकवार्तिक ) २२.
गच्छतु क्वापि ते स्वान्तः ( धर्मकीर्ति–प्रमाणविनिश्चय ) ८९.
चार्वाकोऽध्यक्षमेक ( संग्रहश्लोक ) ९.

---

# III

## टीकाद्वये नामग्राहं निर्दिष्टानां ग्रन्थानां सूची



# IV

## टीकाद्वये नामग्राहं निर्दिष्टानां ग्रन्थकृतां सूची

# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ८ | ११ | तदवनतौ | तदवगतौ |
| ८ | १९ | स्वरूपपप्रकाशनम् | स्वरूपप्रकाशनम् |
| ३० | ३१ | (श्लो० वा०) | (श्लो० वा०, पृ० ३४१) |
| ४१ | ३१ | व्याहतोऽर्थो तत्र | व्याहतोऽर्थोऽत्र |
| ४५ | १० | प्रत्यक्षप्रतीतोऽपि, परार्थं | प्रत्यक्षप्रतीतोऽपि परार्थं |
| ५१ | २२ | इति शब्देन | इतिशब्देन |
| ५२ | १९ | पक्षाभासोऽस्ति लिङ्गतः | पक्षाभासोऽक्षलिङ्गतः |
| ५४ | १६ | नभःपुण्डरीक | नभःपुण्डरीक |
| ५९ | १० | स्त्रयो विमृश्य | स्त्रयोऽविमृश्य |
| ६८ | २४ | स्वक्षणनमिति | स्वलक्षणत्वमिति |
| ६९ | ३१ | विसयामुवलद्धी | विसयाणमुवलद्धी |
| ७० | १६ | बाहुविधं | बाहुविध्यं |
| ७८ | ३ | क्षणयारेसंनिहित | क्षणयोरसंनिहित |
| ८६ | २६ | बिभ्राणां | बिभ्राणं |
| ९० | ३१ | रनतभागः | रनन्तभागः |

# NOTES

[The notes supplement information given in the Introduction. S stands for Siddharsi's Vivrti aud D for Devabhadra's Tippana. The reference are to pages and lines.]

I. 1. The title of the book seems to have been suggested

*Addenda et Corrigenda.*

Page x lines 18-19 *for* so also .....kevala); *read* avadhi and ......kevala) are absolutely pratyaksa,

Page xii line 2 *for* take them to be for *read* take them for

Page xv line 15 *for* centary *read* century

Page xv line 15 *for* hava *read* have

Page xix line 21 *for* Theses *read* These

Page xxiv line 23 *for* anupalabdhi and abhāva *read* arthāpatti and abhāva

Page xxviii line 31 *for* anumāna *read* pratyaksa

Page xxxi line 11 *for* minor *read* middle

Page xxxviii line 11 *for* show of the absence *read* show the absence of

Page xxxix line 20 *for* aim, kevala *read* aim of kevala

Page 107 line 4 *for* reference *read* references

Page 107 line 29 *for* then *read* them

Page 108 line 19 *for* sure of the *read* sure the

Page 109 line 1 *for* has *read* his

Page 109 line 16 *for* Dharmottara's *read* Dharmakīrti's

Page 109 line 25 *for* also पक्ष. By दृष्टान्त *read* also पक्ष and दृष्टान्त. By दूषणाभास

Page 110 line 24 *for* Anaikānta *read* Anekānta

# NOTES

[ The notes supplement information given in the Introduction. **S stands for Siddharsi's Vivrti aud D for Devabhadra's Tippana. The** reference are to pages and lines. ]

1. 1. The title of the book seems to have been suggested by similar manuals of logic such as Dignāga's Nyāyapraveśa and Dharmakīrti's Nyāyabindu, it means an easy ford to Nyāya, pure logic, with which metaphysics is invaribly mixed up here as in other similar manuals.

2. 1-2. प्रमाणव्युत्पादनार्थमिदमारभ्यते is a short sentence in prose by way of a preface to the versified manual.

3. 3. अर्चट was a Buddhist logician of the 9th century A. D., who in his commentary on Dharmakīrti's हेतुबिन्दु criticised the views of Dharmottara and is in his turn being criticised by S.

5. 13. भवदाचार्यः seems to be a reference to Dharmakīrti.

28. 13. अपरोक्षतयार्थस्य etc. यज्ज्ञानं अपरोक्षतया अर्थस्य ग्राहकं ईदृशमेव ज्ञानं प्रत्यक्षमित्युच्यते. Pratyaksa is only such knowledge as grasps the object not indirectly, i. e , directly through the senses.

34. 3. समक्षवत् means प्रत्यक्षवत्. साध्याविनाभुनः लिङ्गात् etc., Siddhasena Divākara rejects the view of Dharmakīrti and others who maintain that अनुपलब्धि, स्वभाव and कार्य are the three हेतुs on which inference is to be based, he also rejects the five grounds of inference, viz, कार्य, कारण, संयोग, समवाय and विरोध. In the न्यायसूत्र inference is divided into three classes, (a) पूर्ववत्, a priori, from cause to effect; (b) शेषवत्, a posteriori, from effect to cause, and (c) सामान्यतोदृष्ट, from analogy, but Siddhasena Divākara does not seem to admit these and S and D openly condemn then as बालप्रलपितप्राय.

41. 10 ff. The expression दृष्टेष्टाव्याहतात् is rather uncouth and hence both S. and D. are at pains to explain it. S says: दृष्टेन

प्रमाणालोकितेन इष्टः प्रतिपिपादयिषितः अव्याहतः अनिराकृतः सामर्थ्यादर्थो यस्मिन् i. e., a statement which does not come in conflict with the object as intended to be conveyed by perception and other sources of valid knowledge. D says that it is either a बहुव्रीहि of three terms or should be explained thus:- इष्टः अव्याहतः (अर्थः) यत्र तदिष्टाव्याहत वाक्यम्, दृष्टेन प्रमाणनिर्णीतेन इष्टाव्याहतं तस्मात्. The sense is as given above.

43. 1. The expression अदृष्टेष्टविरोधकम् also is uncouth. The sense is that शास्त्र should be such as not to come in conflict with things as they are perceived and as they are understood. D explains the compound as follows :- इष्टस्य विरोधः, दृष्टेन इष्टविरोधः, न विद्यते दृष्टेष्टविरोधो यत्र तत्तथा.

49. 10 ff Construe: यथा लक्ष्यनिर्देशेन विना परिक्षिप्यतः यथाकथंचिद् बाणं मुञ्चतः धानुष्कस्य यौ गुणेतरौ गुणदोषौ तौ धानुष्कगुणसंप्रेक्षिजनस्य विरुद्धारेकितौ विरोधशङ्काकलङ्कितौ भवतः, तथा पक्षं विना हेतुं प्रयुञ्जानस्य हेतुः प्रतिवादिनो विरुद्ध इति विपक्षे वर्तमान इति भासेत.

50. 8. There are some logicians who hold that both the varieties of व्याप्ति, viz , अन्वयव्याप्ति and व्यतिरेकव्याप्ति should be shown in order to make doubly sure of the validity of the argument. Siddhasena Divākara feels that they are not necessary as one is quite sufficient for the purpose. S says, प्रयोगस्य च साध्यसाधनफलम्, तच्चैकेनैव सिध्यति, द्वितीयप्रयोगः केवलं वक्तुरकौशलमाचष्टेति नैरर्थक्यादित्यभिप्रायः

50. 17. संबन्धस्मरणात्, the inseparable connection between the साध्य and the साधन is understood, not by अनुमान, but by recollection based upon perception. S gives his reason why it is not understood by अनुमान in this way :- अनुमानात्संबन्धग्रहणे निरवधिरनवस्थानुषज्येत, संबन्धग्राहिणोऽप्यनुमानस्य पुनः संबन्धान्तरग्रहणसव्यपेक्षत्वादिति.

51. 18. वैधर्म्येणेति, S says that the word इति stands for संबन्धस्मरणात् of the previous verse.

52. 19. Note the misprint पक्षाभासोऽस्ति लिङ्गतः which should be read as पक्षाभासोऽक्षलिङ्गतः. Thus we get five पक्षाभासs, viz., प्रतिपाद्यसिद्ध, अक्षसिद्ध i. e. प्रत्यक्षसिद्ध, लिङ्गसिद्ध i. e., अनुमानसिद्ध, लोकसिद्ध and स्ववचनसिद्ध.

53. 3. तस्य हेतोः अप्रतीतिः असिद्धत्वं, संदेहः संशयः, विपर्यासो विरोधः, तैः तदाभता हेतोः आभासः असिद्धानैकान्तिकविरुद्धरूपः भवति.

57. 5. Dharmakīrti in has Nyāyabindu III. 127–136 mentions three more fallacies of the साधर्म्यदृष्टान्त, viz., अनन्वय, अप्रदर्शितान्वय, and विपरीतान्वय and Dharmakīrti explains them as follows: (1) अनन्वय इति यस्मिन् दृष्टान्ते साध्यसाधनयोः सम्भवमात्रं दृश्यते, न तु साध्येन व्याप्तो हेतुः सोऽनन्वयः। यथा यो वक्ता स रागादिमान् इष्टपुरुषवत्; (2) अप्रदर्शितान्वयश्च यस्मिन् दृष्टान्ते विद्यमानोऽप्यन्वयो न प्रदर्शितो वक्त्रा सोऽप्रदर्शितान्वयः। यथा–अनित्यः शब्दः कृतकत्वात् घटवत्; (3) विपरीतोऽन्वयो यस्मिन् दृष्टान्ते विपरीतान्वयः। यथा–यदनित्यं तत्कृतकं घटवत्. Dharmottara says that these fallacies are due to the defect of the statement of the opponent which is taken notice of in the परार्थानुमान. S. says that an illustration in the syllogism is not meant to *show* the inseparable connection between साध्य aud साधन, but to have a *recollection* of such connection and hence अनन्वय is not a flaw of दृष्टान्त but rather that of हेतु. The other two fallacies mentioned by धर्मकीर्ति are due to the fault of the statement of the disputant and not of the दृष्टान्त. Siddhasena Divākara here is clearly criticising Dharmottara's views in this regard, as can be proved by reference to Nyāyabinduṭikā on III. 127–136.

59. 10. Here S says that अव्यतिरेक, अप्रदर्शितव्यतिरेक and विपरीतव्यतिरेक of धर्मकीर्ति are not the flaws in वैधर्म्यदृष्टान्त, as the first of these is due to the defective हेतु and the other two, the fault of the statement of the disputant.

60. 17. Here S explains the terms दूषण and दूषणाभास. By दूषण he understands defects in the reasoning such as पक्षाभास &c. He understands by साधन not only हेतु but also पक्ष. By दृष्टान्त he understands an apparent defect in the reasoning. Dharmakīrti calls दूषणाभास by the term जाति and seems to restrict the term दूषण to the defects of हेतु, i. e., the three varieties of the हेत्वाभास only. Compare: ये पूर्वं न्यूनतादयः साधनदोषा उक्तास्तेषामुद्भावनं दूषणम्। तेन परेष्टार्थसिद्धिप्रतिबन्धात्। दूषणाभासास्तु जातयः–न्यायबिन्दु III. 139–140. धर्मोत्तर comments on न्यूनतादयः as असिद्धविरुद्धानैकान्तिकाः. Dr. Vidyābhūṣaṇa reads उदभावनं in the place of उद्भावनम् in the verse, probably for metrical reasons.

61. 12. This verse gives the definition of केवलज्ञान which

alone can be truly regarded as प्रत्यक्ष according to the Jain scriptures and which alone illuminates for ever the true nature of objects.. The Jain metaphysics regards acts (कर्मन्) as obscuring our vision and other faculties and hence we have ज्ञानावरणीय, दर्शनावरणीय etc. as verieties of कर्मन्. The केवलज्ञानं is free from all such obscuring agencies. सकलं आवरण, तत्स्वरूपप्रच्छादनं कर्म, तेन मुक्तो रहितः आत्मा स्वरूप यस्येत्यर्थः. It is only this ज्ञान which is called परमार्थ-प्रत्यक्ष in the manner indicated in the Introduction. सकलानामर्थात्मनामर्थस्वरूपाणां सततप्रतिभासन अनवरतप्रकाशनम्.

63. 10 The effect of valid knowledge is two-fold, immediate and mediate. The immediate effect is अज्ञानविनिवर्तन, removal of ignorance, which effect is common to all kinds of knowledge. Knowledge, in fact, is of two kinds, the knowledge of a सर्वज्ञ, or absolute knowledge, and the knowledge of an ordinary man. The knowledge of a सर्वज्ञ makes it possible for him to enjoy perfect happiness and bliss, and keeps him in perfect equanimity, while the practical knowledge of an ordinary person enables him to accept what is good and reject what is bad.

64. 1. All-comprehending knowledge grasps objects which, as a matter of fact, have many aspects, while Naya can comprehend things but partially, from one particular point of view. The lengthy commentary in the first part discusses how the views of different philosophers on the nature of objects are wrong and how Anaikānta is their true nature. The systems refuted are the न्यायवैशेषिक (page 64ff.), सांख्य (p. 65 ff.), सौत्रान्तिक (pp 66–67), योगाचार (p. 68), शून्यवादिन्–माध्यमिक (p. 68–70) and अद्वैतज्ञानवादी (pp. 70–73). The second part of the commentary is devoted to the description of the seven nayas (pp. 75-82) and their counter-parts, the durnayas (pp. 82–93).

93. 8. The commentator says: there are three kinds of श्रुत, viz., मिथ्याश्रुत, नयश्रुत and स्याद्वादश्रुत. मिथ्याश्रुत is the wrong doctrine of philosophers other than the Jains; नयश्रुत is the scriptural knowledge from one particular stand-point; e.g., the statement in the भगवती or the व्याख्याप्रज्ञप्ति, the fifth Anga of the Jains, that

a creature in hell dies as soon as born, is to be understood from the point of view of ऋजुसूत्रनय in the face of another statement in that very work that such a creature has ten thousand years as the minimum and thirty-three *sāgaropamas* as the maximum period of life. The स्याद्वादश्रुत however, explains things in all completeness as they truly are. Construe :- नयानां नैगमादीनां श्रुतवर्त्मनि आगममार्गे एकनिष्ठानां एकधर्मग्रहणपर्यवसितत्वेन प्रवृत्तेः स्याद्वादश्रुतमेव संपूर्णार्थविनिश्चायि समस्तवस्तुधर्मप्रतिपादकमित्युच्यते. एकनिष्ठानाम् is a हेतुगर्भविशेषण.

94. 1. Here in this verse the Jain view of the nature of the soul as the receiver of valid knowledge is described. The commentators S and D both discuss at length the nature of the soul as given in the other systems and show how Siddhasena Divākara's description is the only correct description :- तदयं स्वपरप्रकाशः कर्ता भोक्ता नित्यानित्यात्मकः भूतविलक्षणः साक्षात्कृतकतिचिन्निजपर्यायानुमितानाद्यनन्तकालभाविनिजानन्तपर्यायविवर्तः प्रमाणप्रतिष्ठितः पारमार्थिको जीवः सकलनयप्रमाणव्यापकः प्रमातेति स्थितम्.

---

**By the same Author**

1. Āryadeva et son Catuḥśataka, Rs. 10–0–0
2. बौद्धधर्माचा अभ्युदय आणि प्रसार, Re. 1–8–0
3. प्राकृतव्याकरणं हेमचन्द्राचार्यकृतम् Rs. 2–0–0
   (*with English notes*)
4. सूयगडं निर्युक्तिसहितम्–प्रथमो विभागः Re. 1–0–0